**अन्यस्त्विति** । मण्डनः । **अननुभूयमानत्वान्न पुरुषार्थत्वमिति** । नैयायिक-मते मुक्तावस्थायां दुःखाभावस्याननुभूयमानत्वान्न पुरुषार्थत्वं युक्तमिति भावः ।।

86 **पुरुषार्थत्वाविरोधादिति** । यद्यपि प्रेक्षावन्तः पुत्रदारादिवियोगजन्यदुःख-हानिमिच्छन्तो विषशस्त्रोद्बन्धनादौ न प्रवर्तन्ते तथापि विषादेः पुरुषार्थत्वं तावदस्तीति भावः । **न त्वपुरुषार्थत्वादावेवेति** । अत्र न प्रवर्तन्त इति योगः ।।

87 **दुःखनिवृत्तेरनुभूयमानतामात्रं विवक्षितमिति** । एकवारमनुभवो वा वेला-द्वयमनुभवो वा दुःखनिवृत्तिरर्थोऽस्य विकल्पस्य । **दुःखनिवृत्तिसत्तामात्रं वेति** । यावद्दुःखाभावः समस्ति तावत् तद्विषयोऽनुभवोऽपीति भावः । **सर्वदा अननु-भूयमानत्वादिति** । कदाचिदेवानुभूयमानत्वादित्यर्थः ।। **तथात्वे वेति** । सर्वदानुभूयमानत्वे । **निवृत्तेरिति** । दुःखाभावस्य ।। **अनुभूयमानतयैव वा पुरुषार्थत्वमिति** । दुःखनिवृत्तिस्तावत् पुरुषार्थ एव न भवतीति प्रथमपक्षे उक्तम् । अथ कथञ्चिद् भवति निवृत्तेः पुरुषार्थत्वं तर्हि अनुभुयमानतयैव ।। **इति पक्षद्वयमपि निर्दलमिति** । पक्षद्वयमपीदं दुर्बलमित्यर्थः । तथा हि निवृत्तेर-पुरुषार्थत्वं भट्टसंमतम् । अनुभूयमानतयैव वा पुरुषार्थत्वं मण्डनाभिप्रेतम् । एतद्द्वयमपि प्रागुक्तेन ग्रन्थेन यथा निर्दलं तथा प्रतिपादितम् ।

**तृतीयमिति** । दुःखवत् सुखस्यापि निवृत्तिः श्रेय इत्येवं रूपम् ।। **समव्यय-फलानीति** । यथा दुःखस्य निवृत्तिः, तथा सुखस्यापीति समव्ययफलत्वं निःश्रेयसस्येति भावः ।।

88 **सिद्धान्तवार्त्तिकमुद्दीपयतीति** । पुरुषा रागदिमन्त इत्यादिकं सिद्धान्त-वार्त्तिकम् । आशङ्कानुवृत्तिकृता स्यादित्यादिना स्वयमेव कृता इति नाशङ्का-वार्त्तिकं पृथगन्वेषणीयम् । संसारान्तःकूपमण्डुकमतं निराचष्टे यस्येत्यादिना श्लोकेन । **हेयहीनस्य का मुक्तिरिति** । यदा हेयं नास्ति तदा कस्मान्मुक्ति-र्भविष्यतीत्यर्थः ।।

89 **रागाभाव एवेति** । अत्यन्तं रागाभाव इत्यर्थः ।।

7.7. टीकायाम् ।। **एकरूप्यं द्वैरूप्यं वेति** । वीतरागप्रवृत्तेरैकरूप्यम् । सराग-

7.2. प्रवृत्तेस्तु द्वैरूप्यम् । इत्येवं रूपं प्रवृत्तेर्द्वैविध्यमिति वार्त्तिके । अतएवाह

89 उदयनः इष्टानिष्टेत्यादि । सुगमम् ।।

90 ननु पुरुषभेदेऽपि प्रवृत्तेर्द्वैविध्यमेवेति । एका इष्टाधिगमार्था प्रवृत्तिः । अन्या त्वनिष्टहानार्था प्रवृत्तिरित्येवं लक्षणं प्रवृत्तेर्द्वैविध्यमेव वर्तते । ततश्चैक-रूप्यं प्रवृत्तेर्यदुच्यते तदयुक्तमिति भावः । एतदेव भावयति न हीत्यादिना ।।

**पुरुषभेदो रागवैराग्याभ्यामितीति** । यः पुरुषो वैराग्यवान् तदीया प्रवृत्ति-र्दुःखस्येव सुखस्यापि हानार्थैवेति वीतरागप्रवृत्तेरैकविध्यमेव युक्तमिति भावः ।

**अप्रकृतोपनिपातशङ्कामपनेतुमिति** । प्रवृत्तेरपि द्वैविध्यं भवति इत्यादिकं वार्त्तिकमप्रकृतमित्याशङ्कामपनेतुमित्यर्थः ।।

7.1.11. टीकायाम् ।। **दृष्टं प्रवृत्तिसामर्थ्यं हेतुरिति** । रागादिमत्प्रवृत्तिसामर्थ्यं दृष्टम् । तच्च प्रमाणस्यार्थवत्त्वे हेतुः ।। **न तु वीतरागाणामिति** । वीतरागाणां संबन्धि प्रवृत्तिसामर्थ्यं प्रायेण लोके न दृष्टमिति प्रमाणस्यार्थवत्त्वे तन्न हेतुरिति नोपन्यस्तं वार्त्तिककृता ।

वार्त्तिके ।। **अर्थवदनर्थकत्वादिति** । अर्थवच्चानर्थकं चार्थवदनर्थकं तस्य भावस्तत्त्वम् ।।

91 उने ।। **अयुक्तमप्रामाणिकमिति** । अयुक्तमिति टीकाखण्डस्याप्रामाणिकमिति पर्याय इत्यर्थः । **मिथो व्यापकत्वविरुद्धमिति** । यत् प्रमाणं तदर्थवदेव । यदर्थवत् तत्प्रमाणमेव इत्यनयोर्यत् परस्परव्यापकत्वं तेन विरुध्यते प्रमाणमनर्थकमित्यभ्युपगमः ।

92 **परिच्छेदस्यैवेति** । शुक्तिकायां रजतज्ञानस्य । **परिच्छेदत्वापरिच्छेदत्वे** इति । प्रमात्वाप्रमात्वे । सामान्ये परिच्छेद्ये भ्रान्तिज्ञानस्यापि प्रमात्वं विशेषत्वप्रमात्वं दर्शितमित्यर्थः ।। **विरुद्धधर्मसंसर्ग** इति । प्रमात्वाप्रमात्वसंबन्धलक्षणः ।। **जात्येति** । स्वभावेन ।। **अनुभवः स्मृतिश्चेति** । अनुभवस्मृती विहायान्यो बुद्धिप्रकारो नास्तीति भावः ।।

**स्वरूपानुभवोऽस्वरूपानुभवश्चेति** । यथार्थानुभवोऽयथार्थानुभवश्चेत्यर्थः ।

टीकायाम् ।। **उभयत इति** । प्रमाणादप्रमाणाच्च ।।

उने ।। **तथैवेति** । असमर्थयैव प्रवृत्त्या । कारणं च व्यापारवद् भवतीति तस्य व्यापारं समर्थयति तस्येत्यादिना । तस्य साधारणकारणस्य । **तच्चेति** । असाधारणकारणम् ।।

94 **नाप्रमाणादर्थव्यभिचारिण** इति । इदं टीकावाक्ये । अथास्य पर्यायमाह—**व्यभिचारिज्ञानव्यापारादित्यर्थ** इति । व्यभिचारिज्ञानलक्षणो व्यापारो यस्याप्रमाणस्य तद् व्यभिचारिज्ञानव्यापारं तस्मात् ।।

95 **पूर्वप्रक्रान्तं योग्यमेव प्रकृतमुच्यते** इति । पूर्वप्रक्रान्तं प्रकृतमुच्यते परं योग्यमेव सत् ।। **पूर्वं व्याख्यातुमिदानीमाक्षेप्तुमिति** । पूर्वं व्याख्यातुं भाष्यस्यादिवाक्यं वार्त्तिककृतानुदितम् । इदानीं[५७४ ख] त्वाक्षेप्तुमनुवदतीत्यर्थः ।

**पौनरुक्त्यं परिहरन्नाहेति** । प्रथमे आक्षेपसमाधानयोः संग्रहवाक्ये । अग्रेतनस्तु ग्रन्थस्तयोरेव विवरणमिति न पुनरुक्तता । **निरुच्छ्वासमिति** । गतप्राणमिव दुर्बलमित्यर्थः ।।

टीकायाम् ।। **अर्थप्रतिपत्तिरिति** । अर्थावबोधमात्रम् । **तद्विनिश्चय इति** ।

**तन्मात्रमिति** । अर्थनिश्चयमात्रम् । **तदर्थजातीयस्येति** । संप्रत्युपलभ्यमानार्थ-जातीयस्य ।। **श्रेयोहेतुतामिति** । सुखं चाहितनिवृत्तिश्चात्र श्रेयः । **श्रेयः-साधनतानुमानसहितेति** । श्रेयःसाधनतायां यदनुमानं तेन सहिता । **प्रमाण-तोऽर्थप्रतिपत्तिविनिश्चितिरिति** । प्रमाणतोऽर्थप्रतिपत्ताविति भाष्ये प्रमाणतोऽर्थ-प्रतिपत्तिविनिश्चितिरुच्यत इत्यर्थः ।।

96 उने ।। **प्रामाण्यावधारणं श्रेयोहेतुतालिङ्गपरामर्शप्रसवोचितमिति** । प्रामाण्या-वधारणमन्तरेणेत्यत्र टीकावाक्ये यत् प्रामाण्यावधारणं तत् कीदृशं श्रेयोहेतुतायां यल्लिङ्गं तस्य परामर्शस्तस्य प्रसव उत्पादस्तस्योचितम् ।।

**तस्यापीति** । व्याप्तिस्मरणस्य । ननु ताभ्यामित्यत्र तच्छब्देन स्वरूप-निश्चयस्य द्वितीयं व्यप्तिग्रहणं किमिति नानुकृष्यते, अनन्तरप्रक्रान्तत्वात् तस्येत्याह—**व्याप्तिग्रहणे**त्यादि । सुगमम् ।।

टीकायाम् । **अपेक्षितोपायतानुमानसहितेति** । अत्रापेक्षितशब्दवाच्यं श्रेयः । अपेक्षितस्योपायतायां यदनुमानं तेन सहिता । **किमितीति** । कथमित्यर्थः ।। केनोल्लेखेन निश्चिनोतीत्याह—**अपेक्षितोपाय एवेति** । **यतोऽयमेवेति चेति** । अपेक्षितस्योपाय इति विग्रहः ।। **यत्तावदुक्तमिति** । आर्थ्या वृत्त्या ।।

98 उने ।। **प्रामाण्याक्षेपक** इति । प्रामाण्यस्याक्षेपकः पूर्वपक्षवादी भवाने-वेत्यर्थः ।। **स्वात्मन्यभ्यासेऽपि प्रवृत्तिसामर्थ्यादेव तन्निश्चय इति** । अहंप्रत्यये-नात्मनि गृह्यमाणे सततमस्त्यभ्यासः परप्रवृत्तिसामर्थ्यादेव ।

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।
ज्ञात्वा च सततं ध्येय एते दर्शनहेतवः ।।

इति क्रमसिद्धान्तस्यात्मनो निश्चयः, न तु तज्जातीयाल्लिङ्गात् । कुत इत्याह—**अविपरीताभ्यासविरहादिति** । आत्मा हि संसारिणा सर्वदैव शरीरादभेदेन गृह्यते इति विपरीतोऽभ्यासस्तत्र ।। **स चेति** । अभ्यासः ।।

यत्र विषयादि············तत्र स्वतःप्रामाण्यम्, यत्र त्वयं नास्ति तत्र प्रवृत्ति-सामर्थ्यात् प्रामाण्यम् इति चेतसि व्यवस्थाप्याभ्यासाभावे क्रमेण त्रीण्यु-

99 दाहरणान्याह—**यत्रेत्यादिना** । **स्वरूपतो नास्तीति** । विषयगोचरोऽभ्यासो नास्तीत्यर्थः ।। **तद्गोचरस्य** स्वरूपगोचर······स्य । **स्वयं पचत** इति । अत्र पाकादिप्रतिपादकवचसः प्रामाण्यं प्रवृत्तिसामर्थ्येनावधृतम् ।। **स्वरूपेत्यनभ्यास** इति । ······अर्थावधारणं नास्तीत्यर्थः । **यथा वह्निः पाकादिसमर्थ एवेति**

100 **निश्चितवत** इति । श्रेयःसाधनत्वेऽभ्यासोऽनेनोक्तः । **अपरिशीलितवह्नाविति** । [यो]···वह्निः कदाचिन्नोपलब्धस्तादृशि वह्नावित्यर्थः । अनेन तज्जाती······ऽनभ्यास उक्तः । **सर्वत्र चार्थभूयस्त्वं विपर्यये त्वनर्थसामर्थ्यं संभावयतः प्रवृत्तिरिति** । ······अनर्थनिवृत्तिर्भ[ ५७५क ]विष्यति तदभावे तु न भविष्यति । तथा च वह्नौ पाको भविष्यति तदभावे तु न भविष्यतीत्यादि संभावयत इत्यर्थः ।

**साध्याविशिष्टत्वप्रसङ्गादिति** । प्रमाणमिदं प्रमाणजातीयत्वादित्यत्र हि साध्याविशिष्टत्वं सुप्रतीतमेव । **तदुपहितो वा नियतः प्रागभाव** इति । **तदुपहित** इति । समर्थप्रवृत्तिविशिष्टः । समर्थप्रवृत्तेः प्रागभाव इत्य[त्र?] नियत इति प्रामाण्याव्यभिचारी ॥

**प्रवृत्तेः प्रागेवेति वचनादिति** । प्रवृत्तिसामर्थ्यात् प्रागेव तज्जातीयत्वेन लिङ्गेन प्रामाण्यावधारणादिति टीकावचनात् । **तस्येति** । समर्थप्रवृत्तिप्रागभावस्य । **प्रमाणैकनियतस्येति** । प्रमाणाव्यभिचारिणः । यत्र हि ज्ञाने समर्थप्रवृत्तिप्रागभावः तत्र प्रामाण्यमप्यस्ति यतः । **तेनेति** । लिङ्गेन ॥

103 **अनभ्यासदशापन्नसगोचरेऽपीति** । अनभ्यासदशापन्नेन सह गोचरेण वर्तते यत्तदनभ्यासदशापन्नसगोचरं तस्मिन् । **तत्रेति** । अनभ्यस्तविषयज्ञाने ॥ **तज्जातीयत्वेनेति** । अनभ्यस्तविषयज्ञानजातीयत्वेन । **अनुमीयमाने** इति । अभ्यासदशापन्नं तोयज्ञानं प्रमाणं तोयज्ञानजातीयत्वात् अनभ्यस्ततोयविषयं प्रवृत्तिसामर्थ्येनावधृतप्रामाण्यं यत्तोयज्ञानं तद्वदित्यनुमानेन । **प्रवृत्तिसामर्थ्यानुमितप्रामाण्यस्येति** । अनभ्यस्तविषयज्ञानस्य तज्जातीयत्वविकलस्य । **अतिरिक्तमिति** । ज्ञानाद् भिन्नम् ॥ **तदन्यत** इति । अप्रामाण्यात् ॥

**विषयोपाधय एव ते ज्ञानोपाधय** इति । ये विषयाणामुपाधयस्त एव ज्ञानोपाधय इत्यर्थः । **तत्तज्जातीयत्वमिति** । स स प्रकार उपाधिलक्षणो यस्य 104 ज्ञानस्य तत्तज्जातीयं तस्य भावस्तत्त्वम् ॥ **स्वरूपप्रकाराविति** । स्वरूपं धर्मिमात्रं प्रकारो विशेषः ॥ **प्रमाणत्वमेवानुभूतमिति** । धर्मिमात्रे सर्वप्रमाणानां स्वतःप्रामाण्यमित्यर्थः ॥

**स्वरूपप्रकारेणेति** । स्वरूपं चासौ प्रकारश्च स्वधर्म इत्यर्थः । तेन ॥ **गुणादय एवेति** । यथा पूर्वं ज्ञानं गन्धगुणपृथ्वीगोचरत्वात् प्रमाणमेवमिदमपि । इत्यादिनोल्लेखेन गुणादय एवोपाधयः । **तदिदं सामान्यत** इति । व्याप्तेत्यर्थः । **तल्लक्षणेति** । गन्धाद्यत्र लक्षणम् । **लक्ष्यज्ञानत्वमिति** । लक्ष्यं पृथिव्यादि । लक्ष्यस्य ज्ञानं लक्ष्यज्ञानं तस्य भावो लक्ष्यज्ञानत्वम् । ज्ञानत्वं च सामान्यमेव ॥

**आद्यैव गतिरिति** । धर्मिगोचरज्ञानगतिः । स्वतःप्रामाण्यमिति भावः ॥ अथ लक्षणसहचरितलक्ष्यज्ञानोदाहरणान्येव सामान्यतो विशेषतश्च दर्शयन्नाह— **तत्र द्रव्ये इत्यादिना** । **सामान्यत** इति । समस्तपृथ्वीलक्षणत्वाद् गन्धवत्त्वस्य 105 सामान्यतो व्याप्त्या गन्धवत्त्वं पृथ्वीद्रव्यज्ञानस्योपाधिः । **विशेषत** इति । मनुष्यादिशरीरस्य पृथ्वीविशेषत्वात् । शरीरज्ञाने शरीरं विशेषत उपाधिः ॥ **पृथिव्यामनुष्णाशीतज्ञानमिति** । स्वभावतो हि पृथ्वी नोष्णा न च शीता ॥

**चन्द्रमसीत्यादिकमुदाहरणद्वयं** संख्यालक्षणगुणविषयम् ॥ **शब्दसामग्रामिति** । शब्दाश्रयस्य व्योम्नः परोक्षत्वात् सामग्रामिति विशेषणम् । **यद्द्रव्यं**

105 **चलतीत्युपलभ्यते तत् तथेति** । प्रागुक्तविशेषणकदम्बकविशिष्टेन [५७५ ख] प्रमात्रा यद्द्रव्यं चलतीत्युपलभ्यते तत् तथैव भवति ।

**विशिष्टेष्विति** । पृथिव्यादिषु विशेषा इति । गन्धवत्तादय उपाधयः । **समानासमानजातीयप्रमाणप्रसव** इति । समानजातीयादसमानजातीयाच्च प्रमा-
106 णात् प्रसव उत्पादो यस्य संवादस्य स तथा । **बाह्यप्रत्यक्षमिति** । बाह्यार्थ-गोचरं प्रत्यक्षमित्यर्थः । आन्तरप्रत्यक्षं च विचारयिष्यते ।।

**अत्रापीति** । वेदे ।। **तज्जातीयत्वमाप्तप्रणेतृकत्वमिति** । आप्तप्रणेतृकत्वमेव तज्जातीयत्वं वेदे निवेदयिष्यते इत्युत्तरेण योगः ।। मन्त्रायुर्वेदो यथाप्तप्रणेतृक-स्तथा वेदोऽपीति भावः । **एतस्येति** । वेदस्य । **भूयोदर्शनेन मन्त्रायुर्वेदे प्रामाण्याविनाभावसिद्धिरिति** । यैव भूयोदर्शनेन मन्त्रायुर्वेदस्य प्रामाण्याविना-भावसिद्धिस्तदेव वेदस्याभ्यासदशापन्नत्वमिति भावः ।

**मन्त्रायुर्वेदस्यानभ्यासदशापन्नत्वं तदसिद्धिरिति** । मन्त्रायुर्वेदस्य यदनभ्यास-दशापन्नत्वमियमेव प्रामाण्याविनाभावस्यासिद्धिर्वेदस्य । **प्रवृत्तिविपर्ययेणेति** । प्रवृत्तेरसामर्थ्येन । **उपाधिविरोधश्च तज्जातीयत्वमिति** । प्रमाणे ये उपाधयः प्रतिपन्नास्तेषां विरोधस्तज्जातीयेषु मन्तव्यम् । विरुद्धा उपाधय एव तज्जा-तीयत्वमिति यावत् ।। **तदभ्यास एवेति** । उपाधिविरोधस्याभ्यासः ।

108 **केषाञ्चिदिति** । त्रिलोचनाचार्याणाम् ।

तद्वदिति ये हि फलं सिद्धावस्थं निष्प्रयोजनमिति न परीक्ष्यते । एवं तर्हि साधनमपि न परीक्षणीयं स्यात् सिद्धत्वादेव ।।

प्रामाण्याविनाभूतं लिङ्गोपलम्भनमिति स्वस्थावस्थत्वे सति फलज्ञानत्वं प्रामाण्याविनाभूतं लिङ्गं तज्जातीयत्वमित्यर्थः । तस्य यदुपलम्भनं तदभ्यास-दशापन्नत्वम् । अथ लिङ्गमेवाह—**तज्जातीयत्वमित्यादिना** । **एतेनेत्यादि** । स्वस्थावस्थत्वे सतीच्छाज्ञानत्वम् । इच्छाज्ञानस्य प्रामाण्यकारणम् । एतदेव च तज्जातीयत्वमत्र । एवं द्वेषप्रयत्नज्ञानयोरपि भावना कार्या ।

**एतत्साधनस्यापि दृष्टान्तपरम्पराया** इति । अनयोः पदयोस्तुल्याधि-करणता ।। **कथमिति** । दृष्टान्तपरम्पराया अपि कथं प्रामाण्यं साधनीय-मित्यर्थः ।

ननु फलज्ञानस्य प्रवृत्तिसामर्थ्यात् कथं प्रामाण्यम् । न हि फलं प्रवृत्ति-
110 विषयः, किं तु फलसाधनम् इत्याशङ्क्याह—**यद्यपि चेत्यादि** । **तत्सन्तान-गोचराया** इति । उत्तरोत्तरफलप्रवाहविषयायाः । **तज्जातीयफलान्तरसंबन्ध** इति । पयःपानादौ कृते सति वारंवारमुदन्योपशमलक्षणेन फलान्तरेण संबन्ध-
111 स्तज्जातीयफलान्तरसंबन्ध इत्युच्यते । अयमेव च फलसाधनगोचरायाः प्रवृत्तेः सामर्थ्यम् । **तन्नान्तरीयकविजातीयफलसंबन्ध** इति । तन्नान्तरीयकमुदन्यो-

पशमादिफलाविनाभूतं विजातीयमुदन्योपशमापेक्षया विभिन्नजातीयं यत्फलं सुखशरीरसौष्ठवादिस्तस्य सम्बन्धः ।। न ह्युदन्योपशमादुदन्योपशमो जायते, अपि तु विजातीयं सुखादि इति तन्नान्तरीयकविजातीयफलसंबन्धः फलसन्तानगोचरायाः प्रवृत्तेः सामर्थ्यम् ।। **आन्तरप्रत्यक्षज्ञानेषु मध्ये** इति । तृष्णोपशमादिबालज्ञानमान्तरमेव यतः ।। अ[५७६क]**नुव्यवसाय** इति । ज्ञानग्राहकं ज्ञानं मानसमनुव्यवसायसंज्ञम् ।।

9 टीकायाम् ।। **प्रवृत्तिसामर्थ्यलिङ्गजन्मनः** । अर्थवत्प्रमाणं समर्थप्रवृत्तिजनकत्वादिति प्रस्तुतस्यैव व्यतिरेकानुमानस्य । **अन्यस्य वेति** । विश्ववर्तिनो धूमाद्यनुमानस्य ।।

112 उने । **व्याप्तिपक्षधर्मताग्राहकैरिति** । व्याप्तिग्राहकप्रमाणैः कारणव्यभिचारशङ्का निरस्ता । पक्षधर्मताग्राहकैस्तु स्वरूपव्यभिचारशङ्का ।।

115 **धूमादियुक्तधूमध्वजादिज्ञाने** इति । युगपद्वह्निधूमप्रतिभासिनि ज्ञाने चाक्षुषप्रत्यक्षलक्षणा । **अर्थस्यार्थेनेति** । धूमादेर्वह्न्यादिना । **तथाभूतादेवेति** । अव्यभिचरितादेव, सत्यादिति यावत् । **तद्ग्रह** इति । अव्यभिचारग्रहः ।।

116 **कौण्ठेर** इति । मानसत्वे, यद्यपि किल मानसप्रत्यक्षेण ज्ञानं गृह्यते तथापि ज्ञानमित्येतदेव गृह्यते । न तु प्रमाणमप्रमाणं वा इत्येवं रूपो यस्तत्त्वनिर्णयः स तदायत्तः । प्रत्यक्षाद्यन्तरं च बाह्येन्द्रियजज्ञानादि तदा नास्त्येवेत्यनुमानमेव तत्त्वनिर्णयोपायोऽनुसर्तव्यः ।।

117 **अनवस्थामवतारयतीति** । तज्जातीयत्वलिङ्गमत्र । ततश्च तज्जातीयत्वलिङ्गनिश्चायकं यन्मानसं प्रत्यक्षमनुव्यवसायसंज्ञं तदप्यन्यस्मात् तज्जातीयत्वलिङ्गात् प्रमाणं स्यादित्यनवस्थाया अवतारः ।।

**न च शुक्तिकाकारे ज्ञाने रजतं जानामीति स्यादिति** । यादृगाकारं ज्ञानमुत्पन्नं तस्य ग्राहकं यन्मानसं प्रत्यक्षं तत् तस्य तदाकारतामेव गृह्णातीति भावः ।।

118 **उपलक्षणं चैतदिति** । मानसप्रत्यक्षस्येति यत् टीकायामुक्तं तच्च बाह्याभ्यन्तरधर्मिमात्रगोचरस्य प्रत्यक्षस्योपलक्षणार्थम् । **स्वतोऽवधार्यप्रामाण्यतयेति** । स्वतोऽवधार्यं प्रामाण्यं यस्य तत्तथा तस्य भावस्तत्ता तया व्याख्यातम् । स्वतः प्रमाणं तदपि व्याख्यातमित्यर्थः ।।

119 **कोष्ठगतया स्वत एव प्रामाण्यग्रह** इति । मानसप्रत्यक्षेणैव तत्प्रामाण्यग्रह इत्यर्थः स्वीयात् स्वत इति पक्षे । **न स्वयमिति** । न स्वात्मना, स्वसंविदितस्य ज्ञानस्याभावात् ।।

120 **दहनव्यभिचार्यपीति** । आर्द्रेन्धनमन्तरेणापि यतो भवति पावकः ।।

टीकायाम् ।। **कारणस्वभावनियोगपर्यनुयोगयोरिति** । एवं भवतेत्याज्ञादानं नियोगः । एवं किमिति भवतेति तु पर्यनुयोगः ।।

121 उने ।। **तथा सतीति** । संवेदनावधारणे तु सर्वत्र सति । **अनवस्थाविषयसञ्चारो न स्यादिति** । घटज्ञाने समुत्पन्ने घटज्ञानस्य प्रामाण्यानुसरणार्थं ज्ञानपरम्परामनुधावतः पुरुषायुषं तत्रैव क्षीयते । विषयान्तरसंक्रमश्च ज्ञानस्य न स्यात् ।।

9-10 टीकायाम् ।। **तस्मादित्यादिरस्ति** इत्येतदन्त एकवाक्यरूपो ग्रन्थः । अत्र चेत्थमक्षरयोजना । अनभ्यासदशापन्नात् प्रमाणतः सकाशादर्थप्रतिपत्तौ सत्याम्, अर्थसन्देहाद्धेतोः प्रवृत्तिसामर्थ्यसंभवात् नार्थप्रतिपत्तिप्रवृत्तिसामर्थ्ययोः परस्पराश्रय[त्व]मस्तीत्युत्तरेण साध्येन योगः । ननु प्रवृत्तिसामर्थ्यगोचरं यज्ज्ञानं तस्यापि कथं प्रामाण्यमनुमातव्यमित्याशङ्क्याह—**प्रवृत्तिसामर्थ्यज्ञानस्य चाभ्यासदशापन्नस्य तज्जातीयत्वेन प्रामाण्यानुमानादिति** । सुगमम् ।

10 अथानभ्यासदशापन्नस्य का वार्तेत्याशङ्क्याह—**अनभ्यासदशापन्नस्य तु प्रवृत्तिसामर्थ्या[५७६ ख]न्तरज्ञानेन** प्रामाण्यानुमानादिति । सुबोधम् ।।

ननु तस्यापि प्रवृत्तिसामर्थ्यान्तरज्ञानस्य कथं प्रामाण्यमनुमातव्यमित्याशङ्क्याह—**अनादित्वादिति** । संसारस्यानादि[?] तस्यापि प्रवृत्तिसामर्थ्यान्तरज्ञानस्यान्येन प्रवृत्तिसामर्थ्यान्तरज्ञानेन प्रामाण्यमनुमातव्यम् । तस्याप्यन्येनेत्येवम् अनवस्था अभीष्टैवेति भावः ।।

121 उने ।। **अर्थित्वाभावादिति** । निःश्रेयससाधनतया यावन्नानुमितोऽर्थ-

122 स्तावदर्थगोचरस्यार्थित्वस्यैवाभावादित्यर्थः । **पाक्षिकीमिति** । विवक्षितार्थस्यापेक्षितोपायता अस्ति न वेत्येवं संशयः पाक्षिकत्वमपेक्षितोपायतायाः ।। **तत्संशय इति** । अपेक्षितोपायताविषयसंशयः । **तस्यामुपलब्धायामन्यत्रापि स्यादिति** । क्वाप्युपलब्धायामेवापेक्षितोपायतायां संशयो युज्यते । न हि सर्वथा पूर्वमनवगतविषये संशयो भवतीति भावः ।।

**अतः पुनरुपलब्धिरायातेत्यतोऽनादितामादायैव परिहृतमिति** । अयमत्र भावः । अपेक्षितोपायतायाः संप्रति संशयविषयत्वेऽङ्गीक्रियमाणे नूनं पूर्वं क्वाप्यपेक्षितोपायताया उपलम्भेन भाव्यम् । अपेक्षितोपायतोपलम्भश्चानुमानमेव । तच्च न व्याप्तिग्रहं विना । न च सोऽपि प्रवृत्तिं विना इत्येवम् इतरेतराश्रयदोषस्तदवस्थ इति पर्यालोच्य यथार्थसंशयात् प्रवृत्तिः, तथापेक्षितोपायतासंशयादपीति नोत्तरं वितीर्णम् । किं त्वनादितैव परिहारो दत्त इति ।।

टीकायाम् ।। आदिमति चेत्यादि [१०.१] वार्त्तिके अर्थप्रतिपत्तिशब्दं व्याचष्टे—**अर्थप्रतिपत्तिरितीति** ।।

उने ।। **धर्मिप्रतिपत्त्यनुमेयप्रतिपत्त्योर्भिन्नत्वादपेक्षितत्वाच्चेति** । अपेक्षितोपायतारहिता धर्मिमात्रप्रतीतिः प्रत्यक्षागमोपमानेषु, अनुमेयप्रतीतिस्तु

साध्यधर्मविशिष्टधर्मिमात्रप्रतीतिरपेक्षितोपायतारहिता आनुमानिकी । एते च धर्मिप्रतिपत्त्यनुमेयप्रतिपत्ती अपेक्षितोपायताप्रतिपत्तेः सकाशाद् भिन्ने । अपेक्षिते च प्रमात्रा । धर्मिप्रतिपत्तिमन्तरेणापेक्षितोपायताप्रतीतेरेवाभावादिति पर्यालोच्यार्थप्रतिपत्तिशब्देन न केवलैवार्थस्योपायताप्रतिपत्तिरभिप्रेता, किंत्वर्थप्रतिपत्तिरपि ।।

10 टीकायाम् ।। **अस्यैवेति** । प्रमाणतोऽर्थप्रतिपत्तावित्यादेर्वाक्यस्य ।।

123 उने ।। **सूत्रपाठानन्तरमेव ज्ञापयितुमुचितत्वादिति** । प्रथमसूत्रव्याख्यानानन्तरमेव ज्ञापयितुमुचितत्वादित्यर्थः । न तु प्रथमसूत्रव्याख्यान एव ।।

10.11 टीकायाम् ।। **अनेन शास्त्रेणान्वीक्षिक्येति** । आन्वीक्षिकीनामकेनानेन शास्त्रेण व्युत्पादयांबभूवेति योगः । तत्र व्युत्पादने शास्त्रं करणम् । प्रत्यक्षसंशयादिव्युत्पादनं साक्षात्त्वानुमानव्युत्पादनमवान्तरव्यापारः । इतिकर्त्तव्यता इत्यर्थः ।।

उने ।। **दशानामिति** । आद्यन्तवर्जप्रमेयाणाम् । ननु प्रवृत्ते व्युत्पादने प्रमाणं व्युत्पादितं भवति । न हि शावलेयत्वे व्युत्पादिते गोत्वं व्युत्पादितं भवति । गोत्वे तु व्युत्पादिते शावलेयत्वं व्युत्पादितं भवति यथा, तद्वत् प्रमाणे व्युत्पादिते प्रवृत्तिर्व्युत्पादितैव भवति । तस्याः फलतश्च प्रमाणेऽन्तर्भूतत्वात् । ननु प्रवृत्तौ व्युत्पादितायां प्र[५७७ क]माणं व्युत्पादितं भवति, तस्य **प्रवृत्त्य-**

125 **ङ्गत्वात्** ।। अतएवाह—**न हीत्यादि** सुबोधम् ।।

10.4 वार्त्तिके ।। **उताहो प्रवृत्तिरिति** । उताहो प्रवृत्तिः प्रमाणतोऽर्थप्रतिपत्तेः सकाशात् समर्थेत्यर्थः ।।

11.1 टीकायाम् ।। **सामान्याभिधानं च परमन्यायपरमिति** । किं प्रमाणतोऽर्थप्रतिपत्तिः समर्थेत्यत्र प्रमाणशब्दः सामान्यवचनोऽप्यनुमानपर एव द्रष्टव्य इत्यर्थः । **अनुज्ञया वर्तितव्यमिति** । अप्रमाणेन निषेधं कुर्वन्ननुज्ञातोऽसि । अप्रमाणेन निषेधः कर्तुं न शक्यत एवेति परमार्थः ।।

127 उने ।। **निषेधविध्युपाय एव हि प्रमाणमिति** । निषेधे विधौ च य उपायः स प्रमाणमेव, न त्वप्रमाणमपि । **निषेधोपायतामिति** । प्रमाणस्य निषेधहेतुताम् । **व्यामोहेनाप्युपपत्तेरिति** । अप्रमाणेन निषेधामीत्येवंविधस्योत्तरस्य परकीयस्य व्यामोहेनापि संभवादित्यर्थः । **एवंभूतोपायस्थैर्येऽपीति** । अप्रमाणेन निषेधामीत्येवंभूताभिप्रायस्य स्थैर्येऽपि ।।

**इत्यादि भाष्यमिति** । वक्ष्यमाणम् । **कारणेति** । लोकवृत्तस्य हि कारणं प्रमाणम् ।।

**तस्येदानीमक्षरार्थो व्याक्रियत इति मा शङ्किष्ठा** इति । **तस्य** । आगामिभाष्यस्य । आगामिभाष्य एव हेयादयो व्याख्यास्यन्ते । इह त्वस्यैव प्रस्तुतस्य

भाष्यस्य प्रमाणत इत्यादेर्व्याख्यानान्तरार्थं भूमिका रच्यते वार्त्तिककृतेति भावः ।।

11.12 टीकायाम् । एतद्वार्त्तिकग्रन्थस्येति । वार्त्तिकसंबद्धो ग्रन्थो वार्त्तिकग्रन्थः । एष चासौ वार्त्तिकग्रन्थश्च । हेयहानोपायाधिगन्तव्यभेदात् चत्वार्यर्थपदानीत्यत्र वार्त्तिकेऽर्थपदानीत्येवंलक्षणस्तस्य ।।

128 एतदेव उदयनोऽप्याह वार्त्तिकेत्यादिना एवेत्यन्तेन ।

टीकायाम् ।। ईदृशमिति । अर्थोऽर्थशब्द इत्यादिकम् ।। **भाष्यगतस्येति** । एतानि खलु चत्वार्यर्थपदानि इति वक्ष्यमाणभाष्यसंबद्धस्य ।। **उपायः शास्त्रमिति** । हेयहानोपायाधिगन्तव्यभेदादित्यत्रोपायशब्दः शास्त्रवाचक इत्यर्थः ।।

अथ शास्त्रशब्देन किमुच्यते इत्याह—शास्त्रेत्यादि । **तदर्थपर** इति । शास्त्रार्थपरः ।। **अत्र चेत्यादि** । यद्यपि वार्त्तिकग्रन्थे हेयाधिगन्तव्यपदाभ्यां नियतमेव प्रमेयं व्याख्यातम्, तथाप्युपलक्षणद्वारेण द्वादशविधमप्युक्तं वेदितव्यम् ।। **गोबलीवर्दन्यायेनेति** । यथा बलीवर्द आनीयताम्, गौश्चानीयतामित्युक्ते उभयवाचकोऽपि गोशब्दो बलीवर्दशब्दसान्निध्यादनड्वाहीमेवाभिधत्ते, एवं हेयहानाधिगन्तव्यपदसन्निधौ वर्तमान उपायशब्दः समस्तशास्त्रार्थवाचकोऽपि संशयादिषु चतुर्दशस्वेव वर्तते ।।

129 उने ।। न पृथक्कोटित्वमिति । न भिन्नत्वमित्यर्थः । **इतिवार्त्तिकमनुपलम्भो मा भूदिति** । कथं पुनरनेन वाक्येन चतुर्वर्गः प्रदर्श्यते इति यदनन्तरमेव वक्ष्यमाणवार्त्तिकं तदनुक्तोपाय एव भवेत् । यदि चकारेण प्रमाणप्रमाप्रमातृ-

130 प्रमेयरूपस्य चतुर्वर्गस्य सूच[न]ा कृता न भवेत्, **तथापि प्रमाणादेवेति** । प्रमाणस्यापि प्रतीतिः प्रमाणादेवेत्यर्थः ।।

ननु यथा प्रमाणस्य प्रमाणान्तराधीना प्रतीतिरेवं किं निष्पत्तिरपीत्याशङ्क्याह—**निष्पत्तिस्त्वित्यादि** । निष्पत्तिः पुनर्हानस्य प्रमाणस्याज्ञातादेव ज्ञाय-[५७७ ख]मानादेव प्रमाणान्तरात् यस्मात् कारणादतः किं तत्र प्रमाणजनके प्रमाणान्तरे ज्ञानेनावबोधेन ? अयमाशयः । ज्ञातेन प्रमाणेन यज्जन्यते सैव निष्पत्तिः प्रमाणाधीनोच्यते । अज्ञातमपि च प्रमाणं प्रमाणान्तरं जनयति । तस्मात् न प्रमाणनिष्पत्तिः प्रमाणाधीना । प्रमाणतया न बुद्धमपि इन्द्रियादिकं प्रमां जनयति यतः, अतो न प्रमाणाधीनोत्पत्तिः प्रमाणस्येति परमार्थः ।।

**ज्ञातात्तु यस्मात् तस्य प्रामाण्यायत्तत्वमेवेति** । ज्ञातात्तु पुनः प्रमाणाद् यस्मात् कारणाद् यस्य निष्पत्तिर्भवति तस्य प्रामाण्यायत्तत्वम् । यज्ज्ञातं कारकं यज्जनने व्याप्रियते तस्यैव निष्पत्तिः तदायत्ता इहाधिकृतेति भावः ।। **तदिदमुक्तं प्रमायाश्च तत्कार्यत्वादिति** । प्रमायाश्च तत्कार्यत्वादिति वक्ष्यमाणं टीकाशकलमिदं संवादार्थं लिखितं न तु क्रमप्राप्तमिदमद्यापि । **तत्कार्यत्वादिति** च प्रमाणकार्यत्वादित्यर्थः ।।

11.22 टीकायाम् ।। **तदिदं प्रवृत्तिसामर्थ्यादितीति** । प्रमाणतोऽर्थप्रतिपत्तौ सत्यां प्रमातुस्तदितरप्रतिलम्भनात् प्रमायाश्च तत्कार्यत्वादित्येवंरूपं वस्तु प्रवृत्तिसामर्थ्यादित्यनेन भाष्यशकलेनेत्यर्थः ।।

उने ।। ननूपायः कथं प्रमाणम्, उपायशब्देन हि संशयादयश्चतुर्दश यतो विवक्षिता वर्तन्ते इत्याशङ्क्याह—**संशयादीनामित्यादि** । **तरुणा वा वृक्षेण वेति** ।। विकल्पस्वरूपमिदमुपदर्शितम् ।। **तरुवृक्षाभ्यां चेति** । समुच्चयोपदर्शनमदः ।।

133 **तदुपायस्तु पादूकृदादिरिति** । तस्य उपानह उपायः पादूकृच्चर्मकारः । आदिशब्दात् तदीयान्योपकरणसंग्रहः ।।

वार्त्तिके ।। **इदमिति** । प्रमाणतोऽर्थप्रतिपत्तावित्येवमादि ।।

12.6 टीकायाम् ।। **तदिदं वाक्यमवयवश उपन्यस्य वर्ण्यते** इति । अस्य पर्यायमाह—**व्याख्यायतेऽवयवश** इति ।।

उने ।। **विशेषणे क्रियायास्तात्पर्यमिति** । अवयवश इत्येवं लक्षणे विशेषणे व्याख्यानलक्षणायाः क्रियायास्तात्पर्यम् । **विशेष्ये** इति । वाक्यलक्षणे । अवयवा एवात्र व्याख्यायन्ते, न तु वाक्यमित्यर्थः ।।

12.4 वार्त्तिके ।। **प्रमाणत इतीयं निमित्तपञ्चमीति** । निमित्तपञ्चम्यर्थे तसिल् तावदत्र विद्यते इत्यर्थः ।। **अस्याभिधानमिति** । साक्षात्पञ्चमीं परित्यज्य तसिलन्तस्य प्रमाणत इत्येतस्याभिधानम् । अतएवाह टीकाकारः **अस्य प्रमाणत इत्येवंरूपस्याभिधानमिति** । सुगमम् ।। **वचनव्याप्त्यर्थं विभक्तिव्याप्त्यर्थं चेति** पञ्चम्यन्तात् तृतीयान्ताद् वा अयं तसिरिति विभक्तिव्याप्तिः । उभयत्रैकवचनद्विवचनबहुवचनान्ततावविवक्षावशादिति वचनव्याप्तिः ।।

134 उने ।। **पञ्चम्यास्तसेः प्रयोगं दर्शयित्वेति** । प्रमाणत इतीयं निमित्तपञ्चमीत्यनेन वार्त्तिकेन पञ्चम्याः सम्बन्धिनस्तसेः प्रयोगं दर्शयित्वा । पञ्चमीव्यतिरेकेण तसेराक्षेपसमाधाने इति पञ्चमीव्यतिरिक्तविभक्त्यन्ताद् यस्तसिस्तस्याक्षेपसमाधाने कथं पुनः पञ्चमीत्यादिना ये विहिते ।।

टीकायाम् । ननु संप्लवावसरे प्रमाणेनेति वार्त्तिके वक्तुं न युज्यते द्वयो-

135 र्बहू[ ५७८ क ]नां च संप्लवो न त्वेकस्य यतः इत्याशङ्क्याह—**द्वयोरित्यादि** ।

एतदेवोदयनोऽप्याह—नन्वित्यादिना । **न तु करणानां समुच्चय** इति । प्रत्यक्षादिप्रमाजनने यानि प्रसिद्धानि करणानि तानि सर्वाणि सव्यापाराणि संमिलित्वा एकस्यां प्रमायां व्याप्रियन्ते इत्येवंरूपः संप्लवो नाङ्गीक्रियत इत्यर्थः ।। कुत इत्यत आह—**तथा सति फलभेदो न स्यादिति** । एकाकारैव प्रमा स्यात् न प्रमाचतुष्टयमित्यर्थः । सर्वाणि तावदादौ प्रत्येकं सव्यापाराणि भवन्ति । सव्यापारस्यैव करणत्वात् । तदनु समुच्चीयन्ते । ततः समुच्चितैस्तैरेकाकारैव प्रमाजन्येतेति परमार्थः ।।

**नापि समुच्चितानां करणत्वमिति ।** आदौ निर्व्यापाराणां सतां पश्चात् तु समुच्चितानां मिलितानां यत् करणत्वं फलात्यन्तानुकूलव्यापारवत्त्वं तदपि न संप्लवः । कुत इत्याह—**तथा सति व्यापारभेदो न स्यादिति ।** सर्वेषामपि प्रमाणानां प्रमाजननात्यन्तानुकूलो यो व्यापारः स एक एव स्यादित्यर्थः । प्रतीयते तु पृथक् पृथक् । अन्यरूपो हि प्रत्यक्षप्रमाणस्य व्यापारः, अन्यरूपश्चानुमानादेरिति सर्वप्रतीतमेतत् ॥

136 **तस्येति** साधकतमान्तरस्य ॥ **अस्येति** प्रमाणस्य । **स्वव्यापारेत्यादि** । अयमत्र भावः । यत्रैकमेव प्रमाणं प्रवर्तते तत्र व्यवस्था । नतु तस्य प्रमाणस्य स्वव्यापारफलयोरितरप्रमाणनिरपेक्षत्वं व्यवस्था । कुत इत्याह—**तस्य संप्लवेऽपि संभवादिति ।** तस्येतरनिरपेक्षस्य संप्लवे सत्त्वात् । तथा हि संप्लवे सर्वप्रमाणानां व्यापाराः फलानि च परस्परनिरपेक्षैरेव प्रमाणैर्जन्यमानानि सन्ति ॥

137 **प्रकृतिप्रत्यययोरिति ।** प्रमाणेनेत्यत्र निष्पन्नल्युट्प्रत्ययान्ता प्रकृतिः । तृतीयालक्षणस्तु प्रत्ययः । **ज्ञापकस्य कारकत्वशंका मा भूदिति ।** ज्ञापकं प्रमाणं न तु कारकम् । ततश्चार्थं कर्मतापन्नं साधयति निष्पादयति प्रमाणमिति व्याख्यायमानेऽर्थं प्रति प्रमाणस्य कारकत्वशङ्का स्यात् । यदा त्वर्थशब्देनार्थाधिगतिर्व्याख्यायते तदा अर्थमर्थाधिगतिं साधयतीत्ययमर्थः स्यात् । ततश्चार्थाधिगतिं प्रति प्रमाणं कारकम्, अर्थं तु प्रतिज्ञापकमेवेति सिद्धं भवति ॥

13.1 टीकायाम् ॥ **अर्थमर्थाधिगतिं साधयतीति साधकतमत्वादिति ।** प्रमाणेनार्थं साधयतीत्येवं या प्रमाणशब्दात् तृतीया श्रूयते सा ल्युडन्तप्रकृतिलब्धं साधकतमत्वमनुवदतीति भावः । **करणनान्तरीयकस्य हेतुभावस्येति ।** अत्र हेतुत्वं कारकत्वं करणत्वं तु कारकविशेषः । यत्र करणत्वं तत्र हेतुत्वमस्त्येव । हेतुत्वे तु करणत्वं भाज्यम्, आत्मादीनां हेतुत्वेऽपि करणत्वाभावात् ॥

137 उते । साधकत्वेत्यादि । साधकत्वमात्रं हेतुः । साधकतमं तु करणम् । ततश्च साधकत्वमात्रस्यैव प्रमाणफलयोस्तादात्म्यप्रतिषेधकरणाय सामर्थ्ये सति । तमबर्थस्य साधकतमत्वस्यासमर्थत्वात् । न च वाच्यमिति योगः । साधकत्वमात्रशब्दवाच्यो योऽर्थो हेतुलक्षणस्येनैव साध्यस्य प्रमाणफलतादात्म्यनिषेधलक्षणस्य सिद्धत्वात् किमर्थं प्रत्ययवाच्येन हेतुभावोत्तरकालभाविना [ ५७८ ख ] करिष्यामः ॥

138 तथा । **तत्र विप्रतिपत्तेश्चेति ।** तत्र तमबर्थे विप्रतिपत्तेश्च न वाच्यमिति योगः ॥ कोऽपि कमपि तमबर्थं ब्रूते यतः, अतः किमादावेव प्रमाणफलतादात्म्यप्रतिषेधार्थं तदुपन्यासेन ? **कस्मादिति** प्रश्नार्थमभिप्रेत्याहेति । कस्मात् पुनः करणार्थो गम्यते इत्येवंरूपस्य प्रश्नस्यार्थमधिकृत्याहेत्यत्र ॥

**ल्युट्तृतीययोः पौनरुक्त्यं समाहितमिति ।** ल्युटा यदुक्तं साधकतमत्वं तत् तृतीयया अनूदितमिति पौनरुक्त्यमित्यर्थः । अनुवादस्यापि प्रयोजनं वाच्य-

मित्याशङ्क्याह—**न चानुवादत्वमित्यादि** । **अभ्यासस्येति** शब्दावृत्तेः । प्रमाण-शब्दस्य हि द्विविधमावर्तनं ल्युडन्तस्य तृतीयान्तस्य चेत्यर्थः ॥

139 **लौकिक** इत्यादि । लोकशब्दवाच्या अत्र वैयाकरणाः । तन्मतेन प्रमाणत इति प्रयोगे तृतीया विभक्तिः संख्यां ब्रूते । **विशिष्टविषयत्वेनेति** । केनचिद् विशेषणेन विशेषितं वस्तु विशिष्टशब्दवाच्यमिह । **संप्लवाक्षेपोऽसङ्गत एवेति** । द्वयोर्बहूनां वा प्रमाणानामन्यूनानतिरिक्तविषयत्वं संप्लवः । यदा तु विभिन्न-विशेषणविशिष्टं वस्तु प्रमाणानां विषयस्तदा विषयाधिक्यात् प्रमाणसंप्लव एव न घटेत इति प्रमाणसंप्लवाक्षेपोऽसङ्गत एव स्यात् । अतएव आह—**अग्न्या-दीत्यादि** । सुगमम् ॥

**विषयत्वसामान्याभिप्रायमेकवचनमिति** । अन्यथा हि विशिष्टा भिन्ना विषया येषामिति प्राप्नोति ॥

13.6 टीकायाम् । **बहुवचनमान्तर्गणिकभेदाभिप्रायमिति** । द्वे एव प्रमाणे बौद्ध-दर्शने यतोऽतो विशिष्टविषयाणि प्रमाणानीति यद् वार्त्तिके बहुवचनं तदान्त-र्गणिकभेदाभिप्रायम् ॥

141 उने । **सांव्यवहारिकस्वलक्षणमिति** । सामान्यमित्यर्थः । असाधारण-मित्यस्य पर्यायमाह—**देशकालाननुगतमिति** । अस्यैव भावार्थमाह—**विचार-सहमिति** ॥

13.10 टीकायाम् । **देशतोऽननुगमेनेति** । एकस्माद् देशादन्यत्र देशे स्वलक्षणस्या-भावेन । **वेशात्मकस्येति** । अंशात्मकस्य ॥

142 उने । **सामान्यमपि सत् तदाकाराधायकमिति** । सामान्यमपि परमार्थ-सदिति कृत्वा प्रत्यक्षे आकाराधायकं भविष्यति ॥

13.15 टीकायाम् । **भावाभावसाधारण्यादि**त्यस्य हेतोर्यत्खल्वित्यादिना **वाच्यम्**-एतदन्तेन ग्रन्थेन भावना कृता । तत्र च **अन्यव्यावृत्तनिष्ठमेवेति** । अन्यव्यावृत्त-स्वरूपमेवेत्यर्थः । **अमूर्तत्वमिति** मूर्तेरभावः । भावाभावसाधारण इत्यादिर्घट

13.18 इत्येतदन्त उपनयग्रन्थः । **यदि पुनरसाधारणो भावो भवेदिति** । घटो यदि

13.19 सन्नेव भाववदित्यर्थः ॥ **एवमभावासाधारण्येऽपि वाच्यमिति** । यदि पुनर-साधारणोऽभावो न भवेदस्तिशब्दो न प्रयुज्येत विरोधात् । नास्तीत्येव न प्रयुज्येत पुनरुक्तत्वादिति वाच्यमित्यर्थः । **न चालीकस्ये**त्यादिकः **व्यावृत्ते-**रित्येतदन्तो **बाह्यसादृश्याच्चे**त्यस्य हेतोर्भावनाग्रन्थः । **न चेत्यादिको व्यावृ-त्तिमि**त्येतदन्तो **नियतप्रतिभासत्वादि**त्यस्य हेतोर्भावनाग्रन्थः । **तस्मात् सामान्य-मन्यव्यावृत्तिरूपमिति** निगमनम् ।

143 उने । **अस्वलक्षणविषयत्वादिति** । अनेन प्रत्यक्षे प्रमा [ ५७९ क ] णान्त-रस्यान्तर्भावो निरस्तः । **विषयाप्रतिबद्धत्वादिति** । अनेनानुमानेऽन्तर्भावस्य निरासः ॥

144 **विशेष इत्यत्रेत्यादि ।** विशिष्यते यः कर्मतापन्नः स विशेष इति कर्मव्युत्पत्त्या तद्वानेव वाच्यस्ततश्च विशेषव्यतिरिक्तस्तद्वान् न स्यात् इति विषयत्रैविध्यं व्याहन्येत । तस्माद् विशिष्यतेऽनेनेति करणव्युत्पत्त्या विशेषशब्दो वक्रकोटरादींश्च धर्मान् ब्रूते, अन्त्यांश्च विशेषान् । ततश्च सामान्यमूर्द्ध्वत्वादिविशेषो वक्रकोटरादिस्तद्वांस्तु धर्मी स्थाण्वादिरिति विषयत्रैविध्यं सिद्धम् ।।

14.4 **अधिगतत्वादिवार्त्तिकादिति ।** **अधिगतत्वाद् वैयर्थ्यमिति चेदित्येवं** रूपात् ।।

146 **तत एवेति ।** अधिगतविषयत्वादेव **अन्यथेति** वार्त्तिके इति । **अन्यथातदधि-**

14.6 **गतेरित्येवंरूपे ।** **यदि कारणेत्यादि ।** कारणशब्दवाच्यं प्रमाजनकम् । ततश्चान्यथा तदधिगतेरिति कोऽर्थः ? आद्या प्रमा अन्येन प्रमाणेन जनिता, द्वितीया त्वन्येन । विषयस्त्वेक उभयोरिति । **प्रमाणप्रकारभेद** इति । सत्सप्तमीयम् । **न कश्चिद् विषयकृतो विशेषः पिष्टपेषणपरिहारोपयोगी दर्शित** इति । विषयैक्ये सति पिष्टपेषणं तदवस्थमेवेत्यर्थः ।

146 **अनपेक्षितफलत्वं वेति ।** घटविषयायाः प्रमितेरेकदोत्पादात् पुनस्तां

147 नापेक्षते प्रमातेत्यर्थः ।। साधनासंभव इति साधनस्य प्रमाजनकस्य प्रमाणस्येत्यर्थः । असंभवोऽघटना ।।

टीकायाम् । **प्रमाणकारणानीति ।** प्रमायाः कारणानीत्यर्थः ।।

उने । **स्वकारणप्रतिबन्धे हि प्रमाणं न स्यादिति ।** यदि हि प्रमयोत्पन्नया स्वकारणं प्रमाणं प्रतिबध्यते विनाश्यते तदा तत्प्रमाणं प्रमाजनकं स्यादिति भावः ।। **न च विषयाधिगमः प्रमाकारणविरोधीति ।** प्रमाया यत् कारणं प्रमाणं तद्विरोधे न प्रमाजन्म भवतीति भावः । **चेतयेरन् ।** प्रमायाः कारणानीति शेषः ।

**तात्कालिकासाधारणकारणेति ।** तात्कालिकं वार्तमानिकं यदसाधारण-

148 कारणम् । **सहकार्यादीति** सदृशदर्शनादिरूपम् । सदृशदर्शनं ह्यनुभवः । स चासाधारणो न भवत्युपमानादावपि भावात् । **तथाभूता बुद्धिरिति ।** प्रत्युत्पन्नकारणसामग्रीजनिता । **अविशिष्टफलत्वमभ्युपेत्य पराभिप्रायं निराकरोतीति ।** समानविषयाण्यपीत्यनेनाविशिष्टफलत्वमभ्युपगतम् । प्रमाणानीत्यनेन तु पराभिप्रायो निराकृतः । **प्रमाणफलवतोऽपीति ।** प्रमाणलक्षणं यत्फलं तद्वतः । प्रमाणस्य सत इत्यर्थः ।।

**अविशिष्टविषयफलतयेति ।** अविशिष्टविषयं फलं यस्य प्रमाणस्य तत्

149 तथा । तस्य भावस्तत्ता तया । **अनपेक्षितत्वादिति ।** द्वितीयानपेक्षितत्वात् प्रथमस्येत्यर्थः । **तन्निमित्तविरहोपाधित्वादिति ।** प्रमाव्यवहारस्य निमित्तं यथार्थानुभवत्वम् । तद्विरह उपाधिः प्रमाव्यवहारनिषेधे कर्तव्ये । स चात्र

नास्तीति भावः ।। **बाधितत्वाच्चेति** । यथार्थेऽनुभवे प्रमाव्यवहारनिषेधस्य बाधितत्वात् । इत्यपि न युक्तमिति सर्वत्र योगः ।।

150 **वार्त्तिकार्थ** इति । अन्यथा तु प्रत्यक्षेणेत्यादेर्वार्त्तिकस्यार्थः ।।

15.1 टीकायाम् ।। **अनेने [५७९ ख] ति** । अन्यथा प्रत्यक्षेणेत्यादिनेत्यनेन सह सामानाधिकरण्यमस्ति ।

उने ।। **फलस्यापीति** । प्रमाया अपीत्यर्थः ।

15.4 टीकायाम् ।। **साक्षात्कारासाक्षात्कारादिरिति** । साक्षात्कारः प्रत्यक्षप्रमायामसाक्षात्कारस्तदितरासु ।।

उने ।। **कारणभेदेति** । कारणशब्दवाच्यं प्रमाणमत्र ।।

15.6 टीकायाम् ।। **इत्युच्येतेति** । प्रमाणसंप्लववादिभिः ।। **तेन तदर्थं चक्षुर्वा त्वग्वा अभ्युपेतव्येति** । रूपविज्ञानार्थं चक्षुः । स्पर्शविज्ञानार्थं तु त्वगभ्युपगन्तव्येति । **तथा चेत्यादि** । द्रव्यं हि एकेनापीन्द्रियेण परिच्छिन्नमिति द्रव्ये परिच्छेद्ये द्वितीयेन्द्रियस्य यद्यपि वैयर्थ्यं तथापि रूपस्पर्शयोः परिच्छेद्ययोः द्वयोरपीन्द्रिययोः साफल्यम् ।।

उने । **नावश्यं संशयपूर्वकत्वमिति** । घटादयो हि प्रत्यक्षेण निश्चीयन्ते । न च तेष्ववश्यं संशयः पूर्वमस्ति । **सन्दिग्धस्य प्रश्नोऽनुपपन्नः स्यादिति** ।

15.4 किं पुनः प्रमाणस्य प्रमाणत्वम् ? किं चोक्तं भवति प्रमाणमिति एवंरूपो यः सन्दिग्धेन शिष्येण वार्त्तिके प्रश्नः कृतः, सोऽनुपपन्नः स्यादित्यर्थः ।

152 **विचारस्येति** । अस्य पर्यायमाह—**परीक्षाया** इति । तर्कस्येत्यर्थः ।। **न च साध्यसिद्धौ तज्जातीयस्यापि साधकत्वमस्तीति** । अयमत्र भावः । एकेन प्रमाणेन परिच्छिन्ने विषये पश्चात् प्रवर्तमानमानान्तरं सजातीयमपि सत् न साधनं किं पुनरसजातीयमुपलशकलादि, तत्र कारणभावस्यैव विरोधादिति । अभिन्नात्मनि कार्यकारणभावस्यैव विरोधादित्यर्थः ।

**स्वीक्रियत एवेति** । अभिन्नात्मनीति शेषः ।

154 **न च संयोगो नाम विग्रहवान् अन्यः संयुज्यमानात् परशोरस्तीति** । य एव व्यापारी परशुः स एव तस्य संयोगाख्यो व्यापार इति भावः ।

**पाठविपर्ययमिति** । भवितृप्रश्नव्याख्यानेन भावप्रश्नो व्याख्यात इति प्राञ्जलः पाठः ।। अस्य चायमर्थः । भवितृप्रश्नः किं चोक्तं भवति प्रमाणमित्येवं रूपो यो वार्त्तिके तस्य व्याख्यानं केचिदाहुरनधिगतार्थबोधनं प्रमाणमित्यादिना ग्रन्थेन टीकाकृता कृतम् । अनेन च भवितृप्रश्नव्याख्यानेन भावप्रश्नस्य, किं पुनः प्रमाणस्य प्रमाणत्वमित्येवंरूपवार्त्तिकोक्तस्य व्याख्या कृतैव भवति । प्रमाणे व्याख्याते प्रमाणत्वं व्याख्यातमेव टीकाकृतेति परमार्थः ।।

**सहेत्यध्याहृत्येति** । भावप्रश्नव्याख्यानेन सह भवितृप्रश्नो व्याख्यात इत्येवं केचित् सहशब्दमध्याहृत्य व्याचक्षते। अध्याहृतसहशब्दस्य चेदं तात्पर्यम्— भवितृप्रश्नव्याख्यानेन भावप्रश्नोऽपि व्याख्यात एव भवतीति भावप्रश्नव्याख्यानाय न पृथग् यत्नं चकार टीकाकारः ।

156　**अतो न साध्याविशिष्टतेति** । तयोश्चोपदर्शितार्थव्यभिचारेणानर्थवत्त्वादिति टीकावाक्ये प्रदर्शितार्थो प्राप्तिविसंवादः । विपरीतार्थसंभवस्त्वनर्थवत्त्वम् इति विधिनिषेधरूपत्वादनयोर्भेदः सुव्यक्तः । अतोऽनर्थवत्त्वे साध्ये उपदर्शितार्थ-व्यभिचारस्य हेतोर्न साध्यादविशिष्टता ।

टीकायाम् ।। **स्मृतिहेतोरिति** । न चार्थविरहेत्यादि वाक्ये न च इति साम्प्रतमिति योगः ।

158　उने ।। **सामान्येति** । ज्ञानस्य लक्षणः । न तु प्रमात्वमपि [५८० क] मनो-
159　मात्रग्राह्यमेव भविष्यतीत्याशङ्क्याह—**प्रमात्वस्य चेत्यादि** ।। **विपर्ययज्ञाने न समवेयादिति** । इदमंशे धर्मिरूपे विपर्ययज्ञानस्यापि प्रमाणत्वं यदभीष्टं तन्न स्यादित्यर्थः । **परापरभावेनेति** । यथा द्रव्यत्वं परं गोत्वं त्वपरम् एकस्मिन् गोपिण्डे समाविशतः, एवमनुभवत्वप्रमात्वाभ्यामपि भाव्यम् ।।

**आद्ये स्मृतिः कथं प्रमेति** । यदा ह्यनुभवत्वं परं प्रमात्वं त्वपरं तदा प्रमात्वमनुभवे नियम्यते, या प्रमा सा अनुभव एवेत्येवम् । ततश्च स्मृतेः कथं प्रमात्वमनुषज्यते, तस्याप्यनुभवत्वाभावात् । **द्वितीये त्वित्यादि** । यदा हि योऽनुभवः स प्रमेति नियम्यते । तदा सर्वस्याप्यनुभवस्य प्रमात्वविधानाद् विपर्ययस्यापि प्रमात्वं स्यात् । तस्याप्यनुभवत्वात् ।।

160　**साक्षादित्यादि** । यदाहि साक्षात्कारित्वे प्रमात्वं नियम्यते तदा या काचित् प्रमा सा साक्षात्कारिण्येव स्यात् । ततश्चानुमानादिबुद्धयो न प्रमाः स्युः, असाक्षात्कारित्वात् ।

**अथापरमित्यादि** । यदा हि प्रमात्वनिष्ठं साक्षात्कारित्वं तदा प्रमास्वेव तत्स्यात् । अथ चाप्रमास्वरूपे विपर्ययेऽपि तद्दृश्यते ।। **यथार्थत्वमायातमिति चेदिति** । यथार्थत्वं प्रमात्वं तच्च स्मृतावप्यस्तीत्यभिप्रायः परस्य । **तस्या-**
161　**पीति** । ईश्वरनियमस्य । **तदभियुक्तैरपि** । प्रयोगेषु दत्तावधानैः । **स्मृति-फलस्येति** । स्मृतिः फलं यस्य संस्कारस्य स तथा तस्य । **उक्तेष्विति** प्रत्यक्षादिचतुर्षु । **नेत्यादि** । प्रत्यक्षं हि प्रमाणं साक्षात्कारि फलं जनयति, संस्कारस्त्वसाक्षात्कारि स्मरणाख्यं फलं जनयति । अतः कथं तस्य प्रत्यक्षेऽन्तर्भावः ? **लिङ्गेत्यादि** । लिङ्गादयो हि ज्ञाताः प्रतीतिं जनयन्ति, संस्कारस्त्वजातोऽपि स्मृतिं जनयतीति कथं तेषु तस्यान्तर्भावः ?

**असाधारणेत्यादि**। यदा ह्यननुभूतेष्वपि स्मृतिः प्रवर्तते, तदा तस्य संस्कारो न कारणम्, तस्यानुभवपूर्वकत्वात् इत्यसाधारणं कारणं संस्कारातिरिक्तं किमपि वाच्यम्। **अननुभूतसंस्काराभावादिति**। अननुभूते विषये संस्कारस्याभावादित्यर्थः ॥

**नन्वित्यादि कुत एतदित्यन्त** आशङ्काग्रन्थः। **अनुभवेत्यादि**रुत्तरग्रन्थः ॥ **ज्ञानमिति**। स्मृतिरूपं ज्ञानम्। **श्यामताप्रत्ययस्येति**। पूर्वं श्यामः संप्रति पाकेन रक्तस्तस्मिन् संप्रति यः श्यामताप्रत्ययस्तस्य। **अतीतः श्यामताप्रत्यय**

165 **इति**। यदा श्याम आसीद् घटस्तदा यः श्यामताप्रत्यय इत्यर्थः ॥ **तस्मात् स्मृतिरयथार्थैवेति**। स्मृतिकाले तस्यार्थस्याताादवस्थ्यात् स्मृतिरयथार्थैव ॥ **अनाजानिकमिति**। अस्वाभाविकम् ॥

**इदमेवे**त्यादिरुपप्लूयत इत्येतदन्तस्य वाक्यस्य भावना। इदमस्माभिर्यदङ्गीकृतमनुभवपारतन्त्र्यं स्मृतेः तदन्यैः वेदान्तिभिः अन्यथोपप्लूयन्ते। अन्यथोपप्लवं नीयते। केनोल्लेखेन? अवाच्यमित्यनेन। वेदान्तिनोऽनुभवपारतन्त्र्यं स्मृतेरवाच्यमित्याहुरित्यर्थः। **उभयथापीति**। स्मृतेर्यथार्थत्वस्य याचितकमण्डनत्वे पारतन्त्र्ये वा ॥ **तथापि धर्मिण्यपि स्मृतेः प्रामाण्यं मा भूदित्याशयवानिति**। परमार्थतो लोकेनापि यथार्थत्वमेव प्रमाशब्दस्य प्रवृत्तिनिमित्तं स्वीकृतम्। त[ ५८० ख ]थापि लोकप्रयोगस्यैव प्रामाण्यमाश्रितं वाचस्पतिना किमर्थमुच्यते? धर्मिण्यपि स्मृतेः प्रामाण्यं मा भूदिति वाञ्छया ॥

167 **आशङ्कितातिव्याप्तिनिराकरणेनेति**। उपलब्धिहेतुः प्रमाणं चेत् संशया-

169 दावपि प्रसङ्ग इति परैराशङ्किताया अतिव्याप्तेर्निराकरणेन। **तल्लक्षणे** इति। मीमांसकप्रणीते लक्षणे।

170 **प्रायश** इति। केषाञ्चिज्जन्मान्तरे। केषाञ्चिदिह जन्मनि। उपलब्धानामेवोपलम्भनात्। **स्वरूपतोऽनधिगतत्वं बह्वाकुलयेदिति**। धर्मित्वेन ह्यधिगता एव प्रायोऽधिगम्यन्ते भावाः, अतः कथं धर्मित्वेनाधिगतत्वसंभवः? **प्रकारत** इत्यादेरयं भावः। स्तम्भादयो हि यावज्जीवं तैरेव शुक्लादिभिर्गुणैर्विशिष्टाः प्रतीयन्ते धारावाहिभिर्विच्छेदभूतैर्वा प्रमाणैः। न तु तेषु प्रतिक्षणध्वंसी कश्चिदपूर्वापूर्वो गुणप्रकारः प्रतीयते। **तस्मिन्निति**। कर्मणि।

171 **सर्वत्राजन्मान्तरोपलम्भादिति**। न जन्मान्तरोपलम्भोऽजन्मान्तरोपलम्भस्तस्मात्। कुत्रेत्याह—सर्वत्र। इदमुक्तं भवति। न सर्वत्रैव पूर्वज्ञानाधिगतस्य वस्तुनो विनाशः, अपि तु क्वचिदेव। क्वचित् तु स एव विषयः पुनःपुनर्धारया विच्छेदेन चोपलभ्यते इति तद्विषयस्य लोके रूढप्रमाणभावस्याप्रामाण्यं स्यात्। **नानाप्रमातृवदिति**। यथा नाना प्रमातृणां एकस्मिन् विषये युगपज्ज्ञानानि भवन्ति, एवमेकस्यापि प्रमातुर्यानि धारावाहज्ञानानि तानि युगपद् भवेयुः ॥

**एककालावस्थानाकलनादिति**। एकस्मिन् काले यदवस्थानं तस्याकलनात्। सर्वैरेव ज्ञानैर्वर्तमानत्वमेव कलितम्। अतः कथं प्रत्यभिज्ञा स्यात्, तस्या वर्तमानातीतकालाकलननिबन्धनत्वात्॥

172 **नापि भिन्नस्वभाव** इति। अपि त्वेकस्वरूपः। **कालकलाभेदका उपाधय एव कालस्य भेद** इति। वर्तमानादिरूपा याः कालकलाः तद्रूपभेदस्याधायका उपाधय एव कालस्य भेदः। **तत्प्रत्यक्षत्वमिति**। उपाधिप्रत्यक्षत्वम्। **न तावत्प्रतीयमानस्तम्भादिसंसृष्टा** इति। संसृष्टाः संबद्धाः ते च संयुक्ताः समवेता वा। प्रतिक्षणमपूर्वापूर्वा उपाधयः स्तम्भादिषु केचन **संभवन्तीत्युक्तम्** प्रकारतोऽपीत्यादिना प्राक्॥

प्रतिसमयमन्यान्या ज्ञातता मीमांसकाभ्युपेता स्तम्भादिषु उपाधिर्भविष्यतीत्याशङ्क्याह-**ज्ञाततायाश्चेत्यादि**। **प्रतीयमानेतरेति**। प्रतीयमानात् स्तम्भादेरितरे पटादयः। **तज्ज्ञानसंसर्गिण** इति। प्रतीयमानस्य स्तम्भादेर्यज्ज्ञानं तत्संसर्गिणः। कोऽभिप्रायः? पटादीनामुपाधयः स्तम्भादिज्ञानेन सह संसृष्टाः। **तज्ज्ञानसंसर्गभाज** इति। स्तम्भादेर्ज्ञानसंसर्गिण इत्यर्थः। **क्वचिद् भवन्त्यपि इति चेदिति**। आशङ्कामात्रमिदम्। न त्वन्यसंसृष्टा उपाधयोऽन्यस्य संबन्धेन ज्ञाने स्वप्नेऽपि प्रतिभान्ति। **यत्रेति** धारावाहिषु बुद्धिषु।

173 अथान्यथा वेति विकल्पमुपक्षिपति **ज्ञानान्तरेत्यादिना**। **तेनैवेति**।
174 तेनैव प्रमाणेन तेनैवेन्द्रियेण। **प्रागभावनिवृत्तिप्रध्वंसाभावानुत्पत्तिरूप** इति। प्रागभावनिवृत्तिश्च प्रध्वंसाभावानुत्पत्तिश्च रू[१८१क]पं यस्य स तथा। अयमत्र भावः। प्रागभावस्य निवृत्तिः का उच्यते? घटः। प्रध्वंसाभावस्यानुत्पत्तिः का उच्यते घट एव। **सूक्ष्मकालापेक्षयेति**। अत्र सूक्ष्मकालशब्दवाच्या उपाधय एव तथाविधा अलक्ष्यमाणाः॥

175 **सिद्धे साधकतमत्वाभावादिति**। आद्यप्रमाणादेव प्रमालक्षणे कार्ये सिद्धे सति पश्चात्प्रवर्तमानस्य प्रमाणान्तरस्य साधकतमत्वाभावात् न प्रामाण्यमिति
175 पराशयः। न हीत्यादेः **स्यादेतदन्तस्य** किञ्चिद् व्याख्या। साधकस्य करणस्य तथात्वं करणत्वं साधकतमान्तरापेक्षया। करणान्तरापेक्षया न, किं तु प्रधानक्रिया च फलरूपा। कारकान्तरं च करणव्यतिरिक्तं कर्त्रादि। तदपेक्षया साधकतमत्वम्। अन्यथा यत्र धारावाहिज्ञानेषु करणानां समुच्चयः कालभेदेनैकस्मिन् विषये मेलापकस्तत्र परापेक्षयानतिशयित्वादकारणत्वापत्तेः सकाशात्करणानां समुच्चयः क्वचिदपि न स्यात्।

तथा हि यावन्त्येकस्मिन् विषये धारावाहीनि ज्ञानानि तावन्त्येव करणान्यपि। तेषां च करणानां परस्परापेक्षा नास्ति इति तत्र तेषामनतिशयित्वात् करणत्वापत्तिः॥

साधकतमान्तरापेक्षया हि साधकस्य साधकतमत्वं भवद्भिः स्वीकृतम्। न च तत्तेषां करणानां समस्ति परस्परापेक्षितायास्तेष्वभावादिति धारावाहिक-
176 ज्ञानाभाव एव स्यात् करणाभावे क्रियाया अनुत्पादात्॥ **तदेतदिष्यत एवेति**। नैयायिकैरपीदमिष्यत एवेति भट्टाभिप्रायः॥

टीकायाम्॥ **पुरुषानपेक्षितस्येति**। पुरुषेणानपेक्षितविषयस्येत्यर्थः॥

177 उने॥ **वादिविप्रतिपत्तय** इति। अनधिगतार्थाधिगन्तृ प्रमाणमित्यादिकाः प्रमाणविषया विप्रतिपत्तयः॥ **विशेषविधानस्येति**। उपलब्धिहेतुः प्रमाणमिति वार्त्तिककृदुक्तस्य इति न्यायेनेति निराकृता इति योगः॥

टीकायाम्॥ **उपलब्धिमात्रस्यार्थाव्यभिचारिणः स्मृतेरन्यस्य प्रमाशब्देनाभिधानादिति**। अर्थाव्यभिचार्युपलब्धिमात्रत्वं धारावाहिष्वप्यस्तीति तान्यपि व्याप्तान्यस्मल्लक्षणेनेति भावः।

177 उने। **व्यापकस्याव्यापकविरुद्धत्वादिति**। उपलब्धिहेतुः प्रमाणमिति व्यापकं लक्षणम्, धारावाहिनामपि व्यापनात्। अनधिगतगन्तृत्वं त्वव्यापकं तेषामव्यापनात्। **तेन रूपेणेति**। अनधिगतगन्तृत्वलक्षणेन। **तदीयतयेति**। जनकविषयसंबन्धितया। **आहो ज्ञापयन्निति**। तदीयतया प्रतीतिं ज्ञापयन्नि-
177 त्यर्थः। **स्वात्मनि क्रियाविरोधादिति**। प्रतीतेरभिन्नो ह्याकारः। कथमसौ स्वात्मानमेव जनयेत्। **ततो न नियामकान्तरमपेक्षत** इति। अत्र चेदित्यध्याहारः। **किं त्वाकारस्तदीयतया व्यवह्रियते** इति। तदीयतया प्रतीतिसक्ततया प्रतीतेर्नीलाकार इति व्यवह्रियते लोकेन, न त्वाकारस्य प्रतीतिरिति।

तथापि किं सम्पन्नमित्याह—**परमिति**। **तथात्वेनेति**। नियतार्थप्रतीतित्वेन। **व्यवहारनिश्चयात्मा** इति। निश्चितव्य[५८१ ख]वहारहेतुराकार इत्यर्थः। **अतद्व्यावृत्त्यालम्बन एवेति**। अनर्थप्रतीतिव्यावृत्त्यालम्बन एव बोद्धव्यमिति। आकार इति पूर्वेण योगः। **उभयोर्व्यावृत्त्योरिति**। अनीला-
178 कारव्यावृत्त्यनर्थप्रतीतिव्यावृत्त्योः। **एकनिश्चयगोचरत्वे** इति। एकज्ञानविषयत्वे। **निश्चेयनिश्चायकत्वानुपपत्तेरिति**। अनर्थप्रतीतिव्यावृत्तिर्निश्चेया, अनीलाकारव्यावृत्तिश्च निश्चायिका इत्यस्य नियमस्यानुपपत्तेः। **स्वरूपेणार्थ-**
178 **क्रियाविरहादिति**। ज्ञापको हि नीलाकारः। ज्ञापकं च वस्तु न स्वरूपेणार्थ-
180 क्रियां करोति किन्तु ज्ञातं सत्। **सामान्यानिश्चये** इति। अनर्थप्रतीतिव्यावृत्तेरनिश्चये। **जन्यजनकयोरिति**। प्रमाप्रमाणयोः॥

180, 181 **एतेनेति**। आकारनिराकरणेन। **न हि सिद्धं सिद्धेन साध्यत** इति।
181 अपि त्वसिद्धं सिद्धेन साध्यते। **अन्यत्र चरितार्थस्येति**। करणे चरितार्थस्य सतः प्रमात्रादेः। **अन्यत्र कारकत्वमपीति**। प्रमाख्ये फले आत्मादेः कर्तृत्वादि न युक्तमित्यर्थः॥

टीकायाम् ।। **प्रत्यक्षादन्यत्रोपलब्धिहेतुभाव एव तावन्नास्तीति** । प्रमेयस्य हितत्वात् प्रत्यक्षादन्येषु प्रमाणेषु उपलब्धिहेतुभाव एव तावन्नास्तीति ।।

182 उने । **करणफलतद्व्यापारयोर्विषयतया व्यवतिष्ठते** इति । करणफलं च तस्य च करणस्य व्यापारस्तयोर्विषयतया कर्मकारकं व्यवतिष्ठते । तथा हि, करणं परशुः, तस्य फलं छेदः । व्यापारश्च परशोः संयोगः । तयोर्विषयतया व्यवतिष्ठते कर्मकारकं काष्ठादि । एवमेव करणं चक्षुः । तस्य फलं प्रमा । व्यापारः सन्निकर्षः । तयोर्विषयः प्रमेयम् । **तत्रेत्यादि** । अयमत्राशयः यावता प्रमाया विषयस्तावतैव कर्मकारकमिति न कारकं हि विद्यमानमेव भवति । न चातीतादि विद्यते । अथ च प्रमालक्षणस्य फलस्य तदपि विषयो भवति ।
182 अतः प्रमाणचिन्तायां प्रमेयतैवार्थस्य प्रयोजिका न तु कर्मता । **असत्त्वेनाकारकस्यापि फलविषयत्वादिति** । अतीतानागतस्य वस्तुनोऽसत्त्वेनाकर्मकारकस्यापि
182 सतः प्रमालक्षणफलगोचरत्वात् । इति **तन्निर्वाह एवास्य चरितार्थत्वमिति** । अस्य प्रमेयस्य । करणव्यापारे एव कर्तव्ये चरितार्थत्वम्, न तु प्रमाजन्मनि । प्रमाजन्मनि तु करणमेव चरितार्थत्वं यास्यतीति भावः ।।

182 **नचेत्यादि** । न च नैव करणमपि तावन्मात्रेणैव कर्तृव्यापारविषयतामात्रेणैव चरितार्थम् । ईदृशमपि सदित्याह—**कर्तृव्यापारविषयोऽपि** । तदुद्देशेन **कर्मणः कर्त्रा अव्यापारणादिति** । करणमुद्दिश्य कर्त्रा कर्म न व्यापार्यत इति
183 भावः । **तन्निरूपणाधीननिरूपणत्वादिति** । करणनिरूपणाधीननिरूपणत्वात् । **अस्येति** । करणस्य । **समवायित्वविषयत्वकृतामिति** । आत्मा समवायिकारणम् । अर्थस्तु विषयः प्रमाया इति सन्निपत्योपकारकत्वात् करणत्वप्रसङ्गः । प्रत्यक्षो विषयस्तावत् सन्निकर्षस्य साक्षाद्धेतुः । प्रमायास्तु न हेतुः । यस्त्वनुमेयोऽतीतश्च [ ५८२ क ] स कस्यापि न हेतुः ।

ततश्च द्वितीयप्रयोगे अनुमेयादि यद्दृष्टान्ततयोपात्तम्, तदहेतुत्वमात्रेणैव दृष्टान्ततां भजन्ते । न तु प्रमाहेतुत्वनिषेधेनेत्याशङ्क्याह—**यद्यपीत्यादि** । **सामान्यनिषेधः प्रकारमप्याश्रयत** इति । हेतुत्वं सामान्यम् । प्रमाहेतुत्वं तु प्रकारः । ततश्च सामान्यस्य हेतुत्वनिषेधः कृतः सन् प्रकारमपि प्रमाहेतुत्वलक्षणमाश्रयते । हेतुत्वे निषिद्धे प्रमाहेतुत्वं तु सुतरां निषिद्धं भवतीति भावः ।

**एतावतैवेति** । अहेतुत्वमात्रेणैव । **अनाहत्येति** । असाक्षादित्यर्थः । कारकान्तरेऽचरितार्थस्य सतो यत् प्रमां प्रति हेतुत्वं तदेव करणत्वमित्यर्थः ।
187 **अकरणा प्रमोत्पत्तिः प्रसज्यते कर्तुः करणे चरितार्थत्वादिति किं केन संगतमिति** । कर्तुः करणे चरितार्थत्वादकरणा प्रमाणोत्पत्तिः प्रसज्यते इति यदुच्यते तत् किं केन सङ्गतमिति भावः । **वस्तुसिद्धप्रधानक्रियासंबन्धनिबन्धनप्रवृत्तय** इति । वस्तुसिद्धा परमार्थसिद्धा वर्तमानेत्यर्थः । सा चासौ प्रधानक्रिया च प्रमालक्षणा, तस्या एवेह प्रस्तुतत्वात् । तस्याः संबन्धो निबन्धनं कारणं प्रवृत्तौ येषां ते तथा।

218 **चतुर्वर्गानन्तर्भावादिति** हेतुर्भागासिद्धो विरुद्धश्चेतीत्युदयनवाक्यस्य भावना ।। वार्त्तिके ।। **चतुर्वर्गानन्तर्भावाद् भावप्रपञ्चवदभावप्रपञ्चोऽप्युद्दिष्टो वेदितव्य** इति वाक्येन प्रयोगः सूचितः । तत्र चाभावप्रपञ्चो धर्मी, उद्दिष्ट इति साध्यो धर्मः । प्रमातृप्रमाणप्रमेयप्रमितिलक्षणचतुर्वर्गानन्तर्भूतत्वादिति हेतुः । भावप्रपञ्चवदिति दृष्टान्तः । अत्र हेतुर्भागासिद्धः, सर्वत्राप्यभावप्रपञ्चे धर्मिणि चतुर्वर्गानन्तर्भावाख्यस्य हेतोरवर्तनात् । मोक्षो हि विशेषगुणप्रध्वंसस्वरूपत्वादभावः । स च प्रमेयत्वात् चतुर्वर्गान्तर्गतः, न त्वनन्तर्गतः । विरुद्धश्चतुर्वर्गानन्तर्भूतत्वादिति हेतुः । गङ्गावालुकादौ अनुद्दिष्टे एव चतुर्वर्गानन्तर्भावस्य सद्भावादिति ।। इति वार्त्तिकदूषणमाशङ्क्य वृत्तिकारः[१] परिहरति-

28.3 **निःश्रेयसानुपयोगिनि भावप्रपञ्च** इत्यादिना ।।

अयमत्र भावः । नेदं वार्त्तिकवाक्यमित्थं योज्यते । किं तर्हि ? स्वातन्त्र्येणासङ्कीर्णा न प्रकाशन्त इति नोच्यते इत्यत्रानन्तरातीते वार्त्तिकवाक्ये या प्रतिज्ञा तस्यामिवायं द्वितीयो हेतुरुपात्तः चतुर्वर्गानन्तर्भा[ वा ]नन्तर्भावाद्वेति । ततश्चासङ्कीर्णा नोच्यन्ते इति प्रतिज्ञा जाता । अत्र च त एवासङ्कीर्णा विवक्षिता ये निःश्रेयसानुपयोगिनः । ततश्चेत्थं प्रयोगः कार्यः । निःश्रेयसानुपयोगिनोऽसङ्कीर्णा नोच्यन्ते । चतुर्वर्गानन्तर्भावात् । ये इत्थं ते इत्थम्, यथा गङ्गावालुकादयस्तथा चैते । तस्मात् तथा ।

28.2 अथास्य व्यतिरेकमाह—वार्त्तिककारः । **भावप्रपञ्चवदभावप्रपञ्चोऽप्युद्दिष्टो वेदितव्य इतीति** । अस्य व्याख्या । यः पुनर्निःश्रेयसोपयोगी अभावप्रपञ्चः स ग्रन्थकृता उद्दिष्ट इति प्रतिज्ञा । चतुर्वर्गेऽन्तर्भूतत्वादिति हेतुः स्वयमेव दृश्यः निःश्रेयसोपयोग्यात्मादिभावप्रपञ्चवदिति दृष्टान्तः ।।

219 उने ।। **निःश्रेयसानुपयोग्यभावप्रपञ्चाधिकरणतया चतुर्वर्गानन्तर्भावो हेतुरिति** । निःश्रेयसानुपयोगी चासावभावप्रपञ्चश्च सोऽधिकरणं धर्मो यस्य हेतोः स तथा तस्य भावस्तत्ता तया कृत्वा चतुर्वर्गानन्तर्भावो हेतुर्बोध्यः । चतुर्वर्गानन्तर्भावाख्यस्य हेतोर्निःश्रेयसानुपयोगी भावप्रपञ्चो धर्मितया बोद्धव्य इत्यर्थः । **तदधिकरणतयेति** । हेत्वधिकरणतया । **तथाभूत एवेति** । निःश्रेयसोपयोग्येव ।

219 **अनुपलम्भबाधितमिति** । अभावप्रपञ्चोऽप्युद्दिष्ट इति यदुच्यते, तदनुपलम्भबाधितम् । प्रत्यक्षेणात्र शास्त्रे अभावप्रपञ्चोद्देशस्यादर्शनादित्यर्थः ।

220 **अर्थोऽपि शत्रुपुत्राभावादिरिति** । न केवलं मोक्षोऽसङ्कीर्णः । किं तर्हि ? शत्रुपुत्राभावादिरर्थोऽप्यसङ्कीर्णः । कथमस्यार्थत्वमिति चेत्—उच्यते, सुखदुःखहेतु-

१. वृत्तिकारो वाचस्पति मिश्रः

तया अर्यमाणत्वात् । **अवयवेत्यादि** । अवयवा वचनरूपत्वात्, तर्कनिर्णयौ ज्ञानरूपत्वात्, वादजल्पवितण्डास्तु वचनरूपत्वात् सङ्केदाः । **हेत्वाभासा** इत्यादि । **सत्तारहितत्वादिति** । असङ्केदोऽसिद्धाख्यो हेत्वाभासः । **चाक्षुषत्वादित्ययमप्यसिद्धः** । परं सङ्केदः ।। छलजातयश्च वचनरूपत्वादेव सङ्केदाः ।। निग्रहस्थानेषु विप्रतिपत्तयो विपरीतज्ञानस्वरूपत्वादेव सङ्केदाः । अप्रतिपत्तयस्तु ज्ञानाभावस्वरूपत्वादसङ्केदाः ।

28.8 टीकायाम् ।। **प्रथमे कल्पे** इति । सच्च षोडशधा व्यूढं वक्ष्यत इत्यस्य भाष्यस्य व्याख्यानद्वयं टीकाकृतश्चेतसि यद्विपरिवृत्तं तन्मध्यात् **प्रथमे** व्याख्याने इत्यर्थः ।।

221 उदयने ।। **अभिधानानभिधानयोरिति** । प्रथमे व्याख्यानेऽनभिधानमसतः । द्वितीये त्वभिधानम् । एते च विधिनिषेधरूपत्वात् परस्परविरुद्धे ।

29.1 टीकायाम् ।। **प्रकृत्यर्थमिति** । **व्युढमित्यत्र** वह् प्रापणे इत्यस्याः प्रकृतेः संक्षेपोऽर्थः । क्तप्रत्ययस्य तु कर्म ।

वार्त्तिके ।। **एते सङ्केदा इति सूत्रमिति** ।।

भाष्ये ।। तासां खल्वासां सद्विधानामिति यद्वाक्यं तस्यार्थतो व्याख्यानं त एते सङ्केदा इत्येतत् ।। **इति सूत्रमिति** तु **प्रमाणप्रमेयेत्यादि** यत् संपूर्णं सूत्रं पठितं भाष्ये, तस्य व्याख्यानम् ।

223 उने ।। **तात्पर्याभिधानायेति शेष** इति । सर्व एते प्रमाणादयो **विज्ञेया**

29.6 एवंरूपस्य तात्पर्यस्य ।। अतएव टीकायामुक्तं द्वन्द्वपरिग्रहे **तात्पर्यमिति** ।

223 उने । **प्रयोगमात्रनिराकृताविति** । द्विगव्ययीभावयोः सतोरेवं सूत्रमेव न भवतीत्यर्थः । **सम्भावितततत्पुरुषोपलक्षणपरमिति** । षष्ठीसमासग्रहणं

29.9 संभाव्यमानस्य तृतीयातत्पुरुषादेरुपलक्षणपरमित्यर्थः । **इति हीत्यादीति** । इति

224 हि बहुवचनप्रयोजनमित्येतस्य टीकावाक्यस्य ग्रहणकवाक्यमिदम् । **हीत्यर्थ** इति । इति हि बहुवचनप्रयोजनमित्यत्र य इति हि शब्दः स सम्पूर्ण एव हीत्येतस्य यस्मादर्थस्यार्थे वर्तत इत्यर्थः ।।

ततश्च यत् सिद्धं तदाह **तेनेत्यादिना** । इदमत्रैदम्पर्यं यस्मादन्योन्यनिरपेक्षाणां प्रत्येकं प्रमाहेतुभावः प्रमाणानां बहुवचनप्रयोजनं तस्मात् संशयेऽपि बहुवचनं [५८३ क] द्रष्टव्यम् । तस्यापि परस्परनिरपेक्षस्य प्रत्येकं न्यायप्रवृत्त्यङ्गत्वात् । ननु—

प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि [१.१.३]

इतिवन्निर्देशे संशये बहुवचनं न दृश्यत एव । तत् कथमुच्यते संशयेऽपि बहुवचनं द्रष्टव्यमित्याशङ्क्योक्तम्—**आर्थं निर्देशमादायेति** । आर्थ्या वृत्त्या संशयेऽपि निर्देशः समस्तीत्यर्थः ।

**विशेषलक्षणकरणादिति।** दृष्टान्तो द्विविधः साधर्म्येण वैधर्म्येण चेत्येवंरूपात्। **संख्यावचनेनेति।** स चतुर्विध इत्येवंरूपेण। ननु येषां प्रयोजनादीनां निर्देश एव नास्ति, तेषां कथं विग्रह इत्याशङ्क्याह—**यत्र तु निर्देशो नास्ति तत्र लक्षणे यथावचनं विग्रह** इति। लक्षणसूत्रे यादृशं वचनं तस्यानु-
225 वृत्त्या विग्रह इत्यर्थः। **सामान्यमात्रस्यैव प्रयोजकत्वादिति भाव** इति। निर्देशस्य वा संबन्धे भवतु वचनं लक्षणस्य वा संबन्धे भवत्वित्यर्थः। अतएव वार्त्तिककृता यथावचनं विग्रह इत्येतावदेवोक्तम्॥ न तु यथा भाष्यकृतोक्तं निर्देशे यथावचनं विग्रह इति॥

कारकस्यार्थरूपत्वादित्यादेर्वाक्यस्यायमाशयः। अत्रार्थशब्दो यद्यभिधेय-वचनो गृह्यते तदा कारकस्य स्वयमेवाभिधेयत्वात् न तस्यान्यदभिधेयमस्तीत्यतो-ऽयमर्थशब्दः क्रियावचन एव ग्राह्यः॥

30.3 वार्त्तिके॥ **अस्वतन्त्रत्वात् प्रमाणादयोऽपि गम्यन्त** इति। तत्त्वं हि भाव उच्यते। स च भवितृधीन एव भवति। **कुण्डे बदराणां वृत्तिरिति भावे चोदित** इति। अत्र भावशब्दवाच्या वृत्तिलक्षणा क्रियैव चोदिते इति कथिते। **भावस्यास्वतन्त्रत्वादिति।** तत्त्वशब्दवाच्यस्य शब्दप्रवृत्तिनिमित्तस्य भावस्य भवितृधीनत्वात्। **नार्थान्तरमिति।** इषोः स्थितिरित्युक्ते नार्थान्तरं स्थित्या-ख्यमिषोः किञ्चिद्विधीयते, किं तु गतिनिषेध एवेषोः क्रियते॥

231 उदयने॥ **एकदेशिनं किञ्चिदुद्दीपयतीति॥** एकदेशिनमुत्तरे दातव्ये प्रौढं करोति सिद्धान्तीत्यर्थः॥ **व्यवहारगतीत्यादि।** व्यवहारगतिं वस्तुगतिं च समानयोगक्षेमां यः प्राभाकरो मन्यते नाभावापह्नववार्तापि कर्तुं न शक्यत इति भावः। **यस्त्विति।** ताथागतः॥

32.1 टीकायाम्॥ **अनन्तरमेव दर्शयिष्यतीति।** किं पुनस्तत्त्वं किं वा निःश्रे-यसमित्यादिना वार्त्तिककारः॥

233 उने॥ **यथार्थज्ञानोत्पत्तिं प्रतीति।** यथार्थं च तज्ज्ञानं च तस्योत्पत्तिः॥

वार्त्तिके॥ दृष्टं निःश्रेयसमिति। हानोपादानोपेक्षालक्षणम्।

33.7 टीकायाम्॥ **समभिव्याहारादिति** समीपभणनात्॥ **आगमानुमान-**
33.10 **सहकारिकारणाभावेन कार्याभावानुमानमेवात्रार्थे प्रमाणमिति।** आत्मादे-र्द्वादशविधस्य प्रमेयस्य तत्त्वज्ञानाददृष्टं निःश्रेयसं यद्भवति तस्मिन् परिच्छेद्ये कार्याभावानुमानमेव प्रमाणम्। केन कृत्वा यत् कार्याभावानुमानम्? कारकाभावेन। कीदृशं यत् कार्याभावानुमानम्? उच्यते, आगमानुमान-सहकारि आगमानुमाने सहकारिणी यस्य तत् तथा। इदमत्रैदम्पर्यम्। आत्मनो दुःखलक्षणस्य कार्यस्याभावो जन्मलक्षणकारणाभावात्। अत्रानुमाने

सहकारी आगमोऽनुमानं च पक्षा[ ५८३ ख ]द्युपनायकत्वात् । तथा हि आत्मलक्षणधर्मिसिद्धावागमः—अयमात्मापहतपाप्मा इत्यादिः । अत्रानुमानं चेच्छादि [१.१.१०] सूत्रसमुत्थमित्याद्युदयनेन स्वयमेव चर्चितम् ।।

उने । स एष नेति नेतीति । एष आत्मा । नेति न शरीरम् । नेतीति नेन्द्रियं नापि घटादिकमात्मा । रसोऽपीति । अभिलाषः । परमिति ईश्वरम् । परिपूर्णश्लोकपाठस्त्वेवम्—

विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ।।
[ श्रीमद्भगवद्गीता २।४६ ]

अस्यार्थः । निराहारस्य देहिनो रसवर्जं विषया निवर्तन्ते । कोऽभिप्रायः ? आहारपरिहारमात्रेण विषया एव निवर्तन्ते । न तु तेष्वभिलाषोऽपि । ईश्वरे तु दृष्टेऽसावपि निवर्तते ।।

236 **अत्रापीति** । मिथ्याज्ञानाभावे । **प्रत्यक्षमपि द्रष्टव्यमिति** । मानसप्रत्यक्षमात्मादिविषयं द्रष्टव्यमित्यर्थः । **एवं शरीरादिष्वप्यूह्यमिति** । यथात्मपरिज्ञानान्मोक्षे साध्ये आगमादिचर्चा कृता तथा शरीरादिष्वपि द्रष्टव्येत्यर्थः । **विप्रतिपन्नमित्यादि** । अनुमानमेवादृष्टे निःश्रेयसे साध्ये यत् प्रमाणमुच्यते तद्विप्रतिपन्नं प्रति । अविप्रतिपन्नं तु प्रति उपनिषद एव सन्ति ।। तथानुमानं कार्याभावानुमानलक्षणेन दृष्टे निःश्रेयसे साध्ये किलात्रोक्तमुपलक्षणार्थम् । अन्यस्याप्यनुमानस्य नवानामात्मविशेषगुणानां सन्तानोऽत्यन्तमुच्छिद्यते सन्तानत्वात् प्रदीपसन्तानवदित्यादेरत्रार्थे सद्भावात् ।।

236 **एतद्विवरणाद् व्यवच्छेतुमित्यादि** । एतस्य पृथगुपदेशाच्चैतस्य वार्त्तिकस्य यद्विवरणं यदि च प्रमाणाद्येव प्रमेयं स्यात् तस्य च परिज्ञानात् निःश्रेयसं भवतीति नात्मादिप्रमेयं पृथगुपदिष्टं स्यादित्येवंरूपो वार्त्तिकग्रन्थ एव । तस्माद् व्यवच्छेत्तुं भिन्नं कर्त्तुमुत्तरग्रन्थं प्रमेयावधारणार्थायां चेत्यादिकं वार्त्तिक-
34.5 गतमेवावतारयति टीकाकारः । कोऽभिप्रायः ? **यदि च यत्किञ्चिदित्यादिको न पदार्थमात्रमित्याहेत्येतदन्तो** वाचस्पतिग्रन्थः **प्रमेयावधारणार्थायां चेत्यादे-**र्वार्त्तिकग्रन्थस्य पातनाग्रन्थो बोद्धव्यः । तथा **प्रमेयावधारणार्थायामित्यादि** वार्त्तिकमपि स्वतन्त्रं न तु **पृथगुपदेशाच्चेत्यस्य** वार्त्तिकग्रन्थस्य व्याख्यानम् ।

236 **श्रुत्यर्थाभ्यामिति** । प्रमाणप्रमेयसंशयेत्यादिसूत्रे प्रमेयेत्येवंलक्षणया श्रुत्यैव प्रमेयं विहितम् । अर्थापत्त्या च विहितं प्रमाणग्रहणात् । न हि प्रमेयम्-अपरिच्छिन्दत् प्रमाणं भवतीत्यर्थः ।

34.12 टीकायाम् ।। **दृष्टयैव द्वारा इति** । तत्त्वज्ञानान्मिथ्याज्ञानादिनिवृत्तिक्रमो दृष्ट एव यतः ।।

भाष्ये ।। तच्चैतदिति । आत्मादेः खलु प्रमेयस्य तत्त्वज्ञानान्निःश्रेयसाधिगम इत्येतत् ।।

उने ।। **अत्रेति** । प्रथमसूत्रे । **तत्रेति** । द्वितीयसूत्रे । न ह्युत्तरोत्तरापाये तदनन्तरापाय इत्येवंलक्षणो द्वितीयसूत्रार्थः प्रथमसूत्रेऽस्ति ।।

34.12 टीकायाम् । **निःश्रेयसेत्यादि** । नात्रैकस्यैवार्थस्य द्विरुच्चारणात्मकोऽनुवादो गृह्यते । किं त्वनु पश्चात् प्रथमसूत्रार्थात् द्वितीयसूत्रेणायमर्थ उच्यते इत्येवं लक्षणः । **अनूद्येति** । तच्चैतदुत्तरसूत्रेणानुद्यते इति भाष्यम् । एवंरूपेण [ ५८४ क ] वार्त्तिकेनानुवादो भाष्यस्य तच्चैतदित्यादेरधिगच्छन्तीत्यस्य ।।

238 उने । **अत्र च हेयमित्यादि** । हेयं दुःखं तस्य निर्वर्तकमविद्यातृष्णे इत्यादि वार्त्तिकं केषुचित् पुस्तकेषु न दृश्यते । ततो न भवत्येव नाशङ्कनीयम्, टीकाकृता हेयमितीत्युल्लेखेन गृह्णता सिद्धवदुपस्थापितत्वात् ।। **अयथाभाष्येत्यादि** । हेयमित्यादौ भाष्येऽधिगन्तव्यवार्तापि न श्रूयते । वार्त्तिके तु **अधिगन्तव्यो मोक्ष** इत्युक्तम् । अतोऽयथाभाष्यवार्त्तिकस्य । इयं च कुतः ? उच्यते । अर्थानुवादत्वात् भाष्यपरमार्थ एवायं वार्त्तिककृता अनूदितोऽननुभाष्याक्षरव्याख्यानं कृतमित्यर्थः ।।

ननु कथं तर्हि टीकायामनूद्य व्याचष्टे इत्याशङ्क्याह—**व्याचष्टे इति तु यद्व्याख्यातं तदभिप्रायमिति** ।। हेयादिकं भाष्यगतं यावन्मात्रं वार्त्तिककृता व्याख्यातं तदभिप्रायेण टीकायामुक्तं व्याचष्टे इति । तदभिप्रायो यस्य तत्

239 तदभिप्रायमिति समासः ।। **तेनेत्यादि** । यद् व्याख्यातं तदभिप्रायं व्याचष्टे इति यतो जातं तेन कारणेन **तच्चैतदुत्तरसूत्रेणानूद्यते** इत्येतद् भाष्यशकलं वार्त्तिककृता यद्यपि न व्याख्यातं तथापि न दोषः । **इदमिति** । तच्चैतदुत्तरसूत्रेणानूद्यत इति भाष्यम् ।।

**आत्यन्तिकपदसमभिव्याहारादिति** । भाष्ये हानशब्दसमीपे आत्यन्तिकशब्दस्य पाठात् ।। **करणव्युत्पत्तिमित्यादि** ।। अयमत्र भावः । अत्र हानशब्दस्य प्रमाणापवर्गलक्षणमर्थद्वयं विवक्षितं भाष्यकृता । तत्र यदा प्रमाणार्थो हानशब्दस्तदा करणसाधनः । आत्यन्तिकमिति वचनं संबध्यते तदा । यदा त्वपवर्गार्थो हानशब्दः तदाभावसाधनः । आत्यन्तिकमिति च योज्यते

239 तदा । **तत्त्वज्ञानपदस्येति** । हानं तत्त्वज्ञानमित्यत्र वार्त्तिके यो ज्ञानशब्दः प्रमाणपर्यायः स करणसाधन इति टीकाकृता प्रतिपादितम्, तस्य प्रमाणस्योपायः शास्त्रमिति वदता । यतस्तस्यानन्तरोक्तस्य तत्त्वज्ञानस्य प्रमाणस्य प्रमाणापरपर्यायस्योपायः शास्त्रमिति टीकार्थः ।

**एतेनादिवाक्यविरोधः परिहृत** इति। इह स्थाने तस्य प्रमाणस्योपायः शास्त्रमिति वदता वाचस्पतिना। यत् आदिवाक्ये उपायः शास्त्रम् इत्येवं रूपं वार्त्तिकं व्याख्यानयता लिखितमास्ते तेन सह विरोधः परिहृतः। कोऽभिप्रायः? उपायः शास्त्रमित्येवंरूपं वार्त्तिकमादिवाक्येऽप्यस्ति। इहापि स्थानेऽस्ति।

240 अनयोरेक एवार्थो व्याख्यातो वाचस्पतिना। भाष्यगतेत्यादि। हेयहानोपायोऽधिगन्तव्यभेदाच्चत्वार्यर्थपदानीत्येवं रूपं प्राग्वार्त्तिकं व्याख्यानयता टीकाकृता यदुक्तमासीदेतद्वार्त्तिकग्रन्थस्येदृशं व्याख्यानं भाष्यगतस्य त्वन्यथा भविष्यतीति तत्सत्यापितमेतेन ॥ तथा हि, प्राग्वार्त्तिकमित्थं व्याख्यातम्। अर्थोऽर्थशब्दः

240 प्रमाणतोऽर्थप्रतिपत्तावित्यत्र स्थितः। पदं वाचकं येषां तानि **तथेति** ॥ इह तु भाष्येऽर्थपदानीत्यस्यायमर्थः। **पुरुषार्थस्थानानीति** ॥

**भाष्यकारेणैव दर्शित** इति। प्रस्थानशब्देऽप्युत्प्रत्ययकरणे इत्यर्थः। **स चायमित्यादि भाष्यमिति**। स चायमित्यादिक[ ५८४क ]स्य भाष्यमित्येतदन्तस्य

242 टीका गृहीतस्य भाष्यवाक्यस्य सूचनावाक्यमिदम्। **निर्दलं चोद्यं दीपयतीति**। अवलिष्ठं चोद्यं बलिष्ठं करोतीत्यर्थः ॥

36.5 टीकायाम् ॥ **तद्विशेषनिश्चयवचन** इति। ज्ञानविशेषो योऽसौ निश्चयस्तद्वचनः। निश्चयपर्यायोऽवधारणशब्द इत्यर्थः। इह **नगनिकुञ्जे मयूरः** केकायितादिति। इह कश्चिदाह—इदमः प्रत्यक्षावमर्शित्वात् कथमिह सन्दिग्धाश्रयता? उच्यते। इहेत्यत्रैकस्येहशब्दस्याध्याहारात् इह इह वा नगनिकुञ्जे मयूर इति द्रष्टव्यम्। तथा च सुव्यक्तैव सन्दिग्धाश्रयता ॥

243 उदयने। **न तादात्म्यमिति भावः। परस्येति** ॥ सामान्यमुपलब्धं विशेषस्त्वनिर्णीत इति वदन् सूरे त्वम् उपलब्धानिर्णीतयोरैक्यं न समर्थयसे

245 इत्यभिप्रायः प्रेरकस्य। **सन्दिग्धे प्रवर्तते इत्यस्येति**। एवमर्थं न्यायप्रवृत्त्यर्थमित्येवंरूपस्य टीकावाक्यस्यायमर्थोऽवतारणिकाव्याजने व्याख्यातः ॥ न तु सन्दिग्धे प्रवर्तते इत्येवंरूपाण्यक्षराणि क्वापि सन्ति ॥

37.9 टीकायाम् ॥ **स्फुटतरमेतदित्यर्थ** इति। **लौकिकोऽयमर्थ** इति वार्त्तिकस्य

37.5 व्याख्यानमिदम् ॥

247 उदयने ॥ **वैयात्यादिति**। येन प्रयुज्यते तत्प्रयोजनमिति सामान्यमात्रोक्तौ न ज्ञायते किमपि विविक्तं प्रयोजनस्वरूपम्। अतो धृष्टोक्तिरियमित्यर्थः।

37.14 टीकायाम्। **सुखस्याप्त्येत्यादि**। सुखाप्तिदुःखहानी विषयौ, विषयी तु ज्ञानम्। ततोऽयमर्थः। भाविनीं सुखाप्तिं दुःखहानिं वा ज्ञात्वा प्रवर्तते इति सुखाप्तिदुःखहानिविषयं ज्ञानमेव प्रवर्तकं साक्षात् न तु ते। अत्र हेतुः।

37.14 **असत्योरकारणत्वात् सत्योर्वा अनर्थकत्वात् प्रवृत्तेरिति** ॥ असत्योरविद्य-

मानयोः सुखाप्तिदुःखहान्योः कर्त्र्योः प्रवृत्तेः कर्मतापन्नाया अकारणत्वात्। न ह्यविद्यमानं कारणं भवत्यतिप्रसक्तेः। **तथा सत्योरिति**। सत्सप्तमी। ततश्च सत्योर्विद्यमानयोः सुखाप्तिदुःखहान्योः सत्योः प्रवृत्तेरनर्थकत्वात्। सुखाप्तिर्दुःखहानिश्च चेज्जातः किमर्थं प्रवर्तेत ?

37.15 टीयाम्॥ **तथापीत्यादिक इत्यभिप्रायेणाहेत्येतदन्तः** पातनाग्रन्थः सुखदुःखसाधनभावात्तु इत्यादेर्वार्त्तिकस्य॥ तथापीत्येतस्य चायमर्थः। यद्यपि विषयेण विषयी लक्षितस्तथापि पुरुषस्य प्रवृत्तिः सुखप्राप्तिदुःखहान्योर्विषये स्यात् तयोरेव ज्ञातत्वात्। न तु सुखदुःखसाधनविषया प्रवृत्तिः प्राप्नोति। न हि अन्यत्र ज्ञानमन्यत्र प्रवृत्तिरतिप्रसङ्गात्। **न च फलमिति**। अत्र फलशब्द-
37.16 वाच्ये सुखाप्तिदुःखहानी॥

उने॥ **विवक्षितं प्रस्थलीकरोतीति**। अत्र स्थलशब्देन लक्षणया अर्थे वैषम्यं विवक्षितम्। प्रगतं स्थलं यस्मात् प्रस्थलम्। ततश्च प्रस्थलीकरोतीति कोऽर्थः ? प्रगतवैषम्यं करोति विवक्षितं विवृणोतीत्यर्थः॥

उने॥ **स चेदिति**। परीक्षाशब्दः। **तदपेक्षिणमिति**। लिङ्गापेक्षिणम्॥

39.2 टीयाम्॥ **समस्तप्रमाणोपकरणत्वादेव चास्येत्यत्र**॥ **अस्येति** प्रमाणसमूहरूपस्य पञ्चावयवस्य न्यायस्य॥

256 उने॥ **न्यायमूलफलयोरिति**। न्यायस्य मूलं प्रमाणानि। फलं **त्वनु**मेया[५८४ क]धिगतिः॥

39.14-5 टीयाम्॥ **बाधायामित्यादि**॥ **जिज्ञासितेत्यादिना अपक्षधर्मत्वमित्येत**दन्तेन ग्रन्थेनापक्षधर्मत्वं भावितम्। अत्र चायमभिप्रायः। अनुष्णत्वधर्म-
39.16-युक्तस्य वह्नेः कृतकत्वाख्यो धर्मो न सिद्धः। **न चेत्यादिना व्यभिचारादित्येत**-
40.1 दन्तेनानैकान्तिकत्वं प्रतिपादितम्। तथा हि कृतकं च भवत्युष्णं च यथा अयमेव वह्निरिति। **न चेत्यादिना साम्प्रतमित्येतदन्तेन** नैयायिक आशङ्कितो
40.1- बौद्धेन। अयं चाशङ्काया अर्थः। पक्षेण किल व्यभिचारानैकान्तिकत्व-
2 कारणतया बौद्धस्य संमतः। अयं च न युक्तः। अविनाभावव्यभिचारो ह्यनैकान्तिकताया हेतुः॥ अविनाभावश्च सपक्षापक्षयोरनुगमव्यावृत्ती हेतोरुच्यते। पक्षचिन्ता त्वविनाभावविचारेण क्रियत एव। अतः किमिति पक्षद्वारेणानैकान्तिकता त्वयोद्भाव्यते ताथागते[ने]ति॥

नन्वियमाशङ्का निरवकाशैव। बौद्धेन प्रस्तुतस्य हेतोः पक्षधर्मताया
258 एवानङ्गीकारात्। इत्याशङ्क्योदयनः प्राह। **पक्षधर्मत्वं स्वीकृत्येत्यादि**। सुगमम्॥

टीयाम्। **तदेतदिति**। बहिर्व्याप्तिमात्रबलेन पक्षे साध्यसाधनम्। **अन्त**-
40-4 **बहिर्वा इति**। अत्र वाशब्दश्चार्थः॥

260 **सर्वोपसंहारेणेति** यट्टीकामुक्तं तद्व्याचष्टे उदयनो **यत्रेदमित्यादिना** । **अयं चेति** । सर्वोपसंहारः पुनः । **विभज्यते** विघटते ।। **एष चेति** । यत्र नेदमित्यादिकः । **पराभिमतमिति** । बौद्धाभिमतम् । तथा हि । अनुमानस्य यो विषयो न भवति, अपक्ष इत्यर्थः । तत्रास्य हेतोः प्रयोग इत्येतावन्मात्रे व्याख्याने स्ववाचैवापक्षधर्मत्वं हेतोः प्रतिपन्नं भवति । ततश्च तद्द्वारेणैव हेतुर्दुष्टः किं प्रत्यक्षापहृतविषयतया ? यदा त्वनुमानविषये प्रत्यक्षापहृते पक्षे त्वयमर्थो विवक्ष्यते तदा पक्षधर्मस्थसमर्थनपुरःसरं प्रत्यक्षापहृतविषयत्वं हेतोर्दूषणं समर्थितं भवति नैयायिकेन ।।

261 **एकोपाधिरिति** । एकस्य वह्नेरुपाधिरार्द्रेन्धनसंयोगो धूमेन सह संबन्धे । **एकव्यभिचारादिति** । एकस्य वह्नेर्धूमं प्रति व्यभिचारात् । **प्रवृत्तानुमानाप्रतिरोधे** इति । प्रवृत्तं च तदनुमानं च प्रवृत्तानुमानं प्रस्तुतमेव कृतकत्वाख्यं
264 तस्याप्रतिरोधे स्खलनाया अभावे । **तत्प्रतिरोधं त्विति** । प्रस्तुतानुमानस्खलनं पुनः ।। **कस्यायं दण्ड** इति । पक्षेणापि व्यभिचारोद्भावने राजदण्डो न निपततीत्यर्थः ।।

41-1 टीयाम् ।। **तद्गतसाध्यधर्मसन्देह** इति । साध्यधर्मिगतसाध्यधर्मसन्देहे । **तत्रोपलभ्यमान** इत्यत्र **तत्रेति** । सन्दिग्धसाध्यधर्मधर्मिणि पक्ष इत्यर्थः । साधनधर्म इति हेतुः ।।

264 उने ।। **तद्विरहेणेति** । साध्यधर्मविरहेणोपलक्षितः । ननु विपक्षे बाधकं प्रमाणमुपदर्श्य धर्मिणं साध्यधर्मसमन्वितं तद्विरहिणं वा निश्चेष्याम इत्याशङ्क्याह—**शून्यहृदयमित्यादि** । **प्रतिबन्दिरिति** । विपक्षे बाधकं प्रमाणं प्रतिबन्दिरित्युच्यते । ततोऽयं भावः । विपर्यये बाधकं प्रमाणं शून्यहृदयं प्रमातारं प्रत्युपादीयते, न तु सहृदयम् । ततश्च विपर्यये बाधक[५८५ ख]प्रमाणवार्ता मूर्खबौद्धकल्पितैवेत्यर्थः ।।

41-3 टीयाम् ।। **अनुमानमात्रमुच्छिद्येतेति** । अनुमानवार्ताप्युच्छिद्येतेत्यर्थः ।।

272 उने ।। **अथ तत्र विरोधोऽस्तीति** ।। तत्रेन्द्रियान्तरग्राह्यत्वे विरोध इति श्रोत्रग्रहणलक्षणो ह्यर्थः शब्द इति शब्दलक्षणम् । यदि चेन्द्रियान्तरेण गृह्यते शब्दः तदा तल्लक्षणं विरुध्यते ।। **तर्हि स्वरूपापलापे स नास्तीति** ।। यदा हि शब्दस्य स्वरूपमेवापलप्यते तदा शब्द एव नास्ति । अतः कस्याश्रावणत्वं
273 साध्यते इत्यर्थः ।। **इन्द्रियान्तरव्यापारव्यभिचारादिति** । श्रोत्रव्यतिरिक्तचक्षुरादीन्द्रियान्तरव्यापारेण हि रूपादिर्गृह्यते, न चासौ शब्दो भवति । अत इन्द्रियान्तरेणाग्राह्यत्वं निश्चितमेव शब्दस्य । **तत्र चेति** । स्वरूपापलापपक्षे ।
273 **वलितपूर्वपक्षदलनालग्नकमिति** । वलितो निष्पादितः प्रतिपादित इत्यर्थः । स चासौ पूर्वपक्षश्च तस्य दलनं निराकरणं तत्रालग्नकमसंबद्धमसमर्थमित्यर्थः ।।

41.1 अयमत्र भावः । **तैस्तु न प्रत्यक्षस्य विषयो ज्ञात** इत्यादि वार्त्तिकं भावार्थरहितं सत अभिशापमात्रमेव । न बौद्धपक्षः क्षोदक्षमः । अतोऽस्य भावार्थकथनाय पीठमारचयां चकार वाचस्पतिः ।।

41-12 टीयाम् ।। **सविशेषणौ हि विधिनिषेधौ विशेषणमुपसंक्रामत** इति । यत्र हि केनचिद् विशेषणेन विशिष्टस्य वस्तुनोऽभिधानं तत्र परमार्थतो विशेषणस्यैव विधिः । यथा स्वर्गकेवलार्थिना जीवेन तपोध्यानादि कर्तव्यमित्यत्र स्वर्गकेवलार्थित्वस्य विशेषणस्यैव विधिर्न तु विशेष्यस्य जीवस्य तस्य स्वयमेव लब्धत्वात् । यथा यत्र केनचिद् विशेषेण विशिष्टं वस्तु निषेध्यते, तत्र विशेषणस्यैव परमार्थतो निषेधः । यथा नायं सुन्दरः पुरुष इत्यत्र सुन्दरत्वस्यैव निषेधो न तु पुरुषस्य । एवमत्राप्यश्रावणः शब्द इति श्रावणत्वस्यैव विशेषणस्य निषेधो न तु शब्दस्य विशेष्यस्य । **विशिष्टविधानमपीति** । विशिष्टस्येति विशेष्यस्य विधानम् ।।

273 उने ।। **विशिष्टनिषेधोऽपि द्रष्टव्य** इति । विशिष्टस्येति विशेष्यस्य
274 निषेधः । **विशेषणविशेष्यभावावस्थितः पदसमूहो वाक्यमिति** । यदा अश्रावणः शब्द इत्यत्र अकारो नञर्थोऽसमस्त एव विवक्ष्यते, तदापि विशेषणविशेष्यभावावस्थितपदसमूहात्मकवाक्यबलात् श्रावणत्वाख्येन विशेषणेनैव सह संबध्यते,
276 न तु विशेष्येण शब्देनेति भावः । **न चोपपादको विरोधी नामेति** । यो विरोधी स उपपादक उपस्थापको न भवति । श्रावणत्वनिषेधस्य च शब्दाभावो
767-7 नोपपादको नोपस्थापकः । किं तर्हि ? शब्दसद्भावः । **तस्य तुच्छत्वादिति** । तस्येति निषेधस्य । **शब्दश्रोत्रयोः संबन्ध** इति । अत्र संबन्धः समवायो विवक्षितः ।।

टीयाम् ।। **वचनार्थाविरोधिन** इति । वचनस्यार्थो वचनार्थः श्रूयमाणोऽर्थ इत्यर्थः ।।

278 उने ।। **रुद्रो ह वेति** । रुद्र एव ।। **अनुवादमात्रमिति** । स्तुतिमात्रम् । अस्येति । नरशिरः कपा[५८६ क]लस्य । **अह्नेनवुकेति** । एकत्र पात्रे बहूनां भोजनमह्नेनवुकेत्युच्यते दाक्षिणात्यैः ।। **अथेत्यादि** । अयमत्र भावः । यथा अह्नेनवुक[ादि]क्रिया आम्नायमूला इति साधयसि, एवं श्रेयोहेतुरियमित्येव साधय किं वेदमूलत्वसाधनप्रयासेन ? तदपि श्रेयोहेतुत्वसाधनार्थमेव यतः ।
280 **मूलानुमानमेवेति** । मूलस्य वेदस्यानुमानमनन्तरमेवोपदर्शितम् ।।

टीयाम् ।। **शाक्यभिन्नकादीनामिवेत्यत्र** भिन्नकास्तुरुष्काः कथ्यन्ते । **वेदानुमानमूलमिति** । वेदस्यानुमानं वेदानुमानं तस्य मूलं लिङ्गम् ।।

280 उने ।। **पुनरुक्ततां परिहरन्नाहेति** । किमुक्तं भवति शुचीत्यनेन वार्त्तिकेन

सह शुचि नरशिरःकपालमिति कोऽर्थ इत्येतस्य वार्त्तिकस्य पुनरुक्तता टीकाकारेण परिहृता अपि चेत्यादि वदता ।।

टीयाम् ।। **पूर्वप्रवृत्तमिति** । शब्दोपलब्धिः करणकार्या क्रियात्वात् छिदिक्रियावदिति पूर्वप्रवृत्तमनुमानम् । **तद्बलभावीति** । पूर्वप्रवृत्तानुमानबलेन भवनशीलम् । किमित्याह—पश्चात्तनमनुमानम्, अश्रावणः शब्दः कृतकत्वाद्घटवदित्येवंरूपम् ।। **न तु ज्ञानाकारालीके बहिरिति** । ज्ञानाकारश्च योगाचारपरिकल्पितोऽलीकं च तुच्छस्वरूपं शून्यत्वादिपरिकल्पितं बहिर्नास्ति । अतो न तयोर्निषेधः । अपि तु लब्धरूपस्य वस्तुन एव क्वचिन्निषेधः । तद्ग्राह्यत्वमिति श्रवणेन्द्रियग्राह्यत्वं, श्रवणेन्द्रियेण सह संबन्धः । **चरममिति** । पश्चात्तनम् ।

281 उने ।। **स्वसिद्ध्यर्थमिति** । अनुमानसिद्ध्यर्थम् । लिङ्गसिद्ध्यर्थमित्यर्थः ।। **स्वाश्रयसिद्ध्यर्थमिति** । धर्मिसिद्ध्यर्थम् । **स्वव्यापकसिद्ध्यर्थमिति** । साध्यधर्मसिद्ध्यर्थमित्यर्थः । **व्यापकसाधकेन बाधितमिति** । व्यापकस्याश्रावणत्वस्य साधकं श्रावणत्वानुमानम्, प्रतियोगिनिरूपणाधीनत्वादभावनिरूपणस्य । न 183 हि घटेऽनिरूपिते तदभावो निरूपयितुं पार्यते । **सत्प्रतिपक्षतेति** । प्रकरणसमता ।। **अगृह्यमाणविशेषावस्थायामिति** । द्वयोरनुमानयोर्मध्यादन्यतरस्य यावदद्यापि बलवत्त्वं न निश्चीयते तावदगृह्यमाणविशेषावस्थेत्युच्यते । **स एवेति** । सत्प्रतिपक्षिताख्यो दोषः, न त्वनुमानबाधितत्वलक्षणः ।

नन्वन्वयव्यतिरेकग्रहणेन यथा पक्षधर्मत्वासत्प्रतिपक्षत्वे उपलक्षिते, तथा अबाधितविषयत्वमपि किमिति नोपलक्ष्यते इत्याशङ्क्याह—**अबाधितविषयेणे-** 183 **त्यादि** । अयमत्र भावः । अबाधितविषयेणानुमानेन सह एकत्र समावेशाभावो यथा अनुमानस्य नास्ति एवं प्रत्यक्षादीनामपि । अतोऽबाधितविषयेण सह समावेशाभावस्य सर्वसाधारणत्वादबाधितविषयत्वं नोपलक्षितम् । **तद्रूपपरि-** 284 **हारेणेति** । अबाधितरूपत्वपरिहारेण । **क्व बाध्यबाधकभाव** इति । सत्प्रतिपक्षतयैव सर्वमाक्रान्तं यतः । **विशेषेण गृहीतमिति** । बलवत्तया अवधारितम् । **परस्परनिरपेक्षयोरपीति** । सापेक्षयोः सिद्धान्तिनापि बाध्यबाधकभावः स्वीकृत एव शब्दस्य श्रावणत्वाश्रावणत्वानुमानयोर्मूलमूलिरूपयोर्यथा इत्यपिशब्दो द्योतयति ।।

285 **तदेतदनयोस्तुल्यत्वम्** । अनयोरनुमानयोरिदं तुल्यत्वं यदेकेन अनन्यथासिद्धेन अन्यस्याप्यनन्यथासिद्धस्य न बाधनम् । प्रत्यक्षेण तु अनन्यथासिद्धमप्यनुमानं बाध्यते इत्यधिकबलता प्रत्यक्षस्यानुमानात् । **अन्यथासिद्धत्वेन दूषितत्वादिति** । अन्यथासिद्धत्वाख्येनैव दूषणेन दूषितं तत् । अतः किं तत्रानुमानबाधया कार्यम् ? न हि मृतो मार्यते । ननु एवं तर्हि कथं वाचस्पतिना अश्रावणः शब्दः कृतकत्वादित्यादिकमनुमानं टीकायामनुमानबाधितमुक्तम् ?

उच्यते । यत्र मूलमूलिभावोऽस्त्यनुमानयोस्तत्र मूलानुमानेन बलवता पश्चात्तनं बाध्यते इत्युक्तं वाचस्पतिना । यत्र तु परस्परनिरपेक्षयोरनुमानयोः प्रयोगस्तत्रापाततस्तावद् द्वयोरप्यनन्यथासिद्धत्वस्याभासनात् सत्प्रतिपक्षत्वाख्यो दोषः । तदनु विचारे प्रवृत्ते यदन्यथासिद्धं निश्चीयते तदन्यथासिद्धत्वाख्येनैव दूषणेन दुष्टमित्युपेक्ष्यते । द्वितीयं त्वनन्यथासिद्धमिति कृत्वा स्वीक्रियते ।।

287 ननु किमिदमनन्यथासिद्धत्वमित्याह—**उपदर्शितप्रकारादन्येन व्यवस्थापयितुमशक्यमित्यर्थ** इति । शुक्तिकाशकलादौ रजतादिज्ञानेन यो दर्शितः प्रकारः स पश्चात्तनेन नेदं रजतमित्यादिना बाधकेनान्यथाव्यवस्थाप्यते इति कृत्वा अन्यथासिद्धं तत्प्रत्यक्षम् । यत्तु नैवं तदनन्यथासिद्धं यथा सत्यरजते रजतज्ञानमिति । नन्वन्यप्रकारव्यवस्थापनं कथं क्रियते इत्याह—**अन्यप्रकारव्यवस्थापनं च विषयसंकोचमात्रेणेति** । विषयस्य संकोचः संक्षेपः तन्मात्रेणान्यप्रकारव्यवस्थापनं विधीयते । इदमत्रैदम्पर्यम् । प्रदीपकलिकादिषु यत् स्थिरत्वग्राहि प्रत्यभिज्ञाप्रत्यक्षं तत्परिमाणभेदलक्षणेन लिङ्गेन विनाशग्राहिणा विषयसंकोचद्वारेणान्येन प्रकारेण व्यवस्थाप्यते । प्रदीपव्यक्तिविषयं तन्न भवति, किं तु प्रदीपत्वसामान्यविषयमित्यर्थः ।।

ननु शुक्तिकाशकलादौ यद् रजतादिज्ञानं तत् किं विषयसंकोचमात्रेणान्यप्रकारतया व्यवस्थाप्यते, उतान्यथा इत्याशङ्क्याह—**न बाधकं विना भ्रान्तत्वेनापि** । अत्रैवमन्वयः । न केवलं विषयसंकोचमात्रेण अन्यप्रकारव्यवस्थापनम् किं तु भ्रान्तत्वेनापि शुक्तिकादौ रजतादिज्ञाने । परं न बाधकं विना नेदं रजतमित्यादिनोल्लेखेन बाधके प्रवृत्ते भ्रान्तत्वं व्यवस्थाप्यते । तद्व्यवस्थापनाच्चान्य-

288 प्रकारव्यवस्थापनं क्रियते ।। **तथा सतीति** । बाधकं विना भ्रान्तत्वे सति ।

**संभावयतीति** । भावयति विस्तारयतीत्यर्थः । **सत्प्रतिपक्ष्यते वा** इति । सत्प्रतिपक्षः क्रियते सत्प्रतिपक्ष्यते ।। **भ्रान्तस्याक्षेप** इति । **विवरणफलमिति** । विवरणस्य **प्रयोजनेत्यादेः कोऽवसर इत्यर्थ** इत्येतदन्तस्य टीकावाक्यस्येदं फलम् । यदुत भ्रान्तस्य परस्याक्षेप इति ।

टीयाम् ।। **तत्र शब्दार्थमिति** । **तत्र वादजल्पौ सप्रयोजनावित्येवंरूपे** भाष्ये यः तत्रशब्दस्तस्यार्थं व्याचष्टे ।

289 उने ।। **वक्ष्यति हीति** । पृथगुद्दिष्ट उपलक्षणार्थम् । उपलक्षितेन व्यवहारस्त[५८७ क]त्त्वज्ञानार्थं भविष्यतीत्येवंरूपं ग्रन्थमिहैव प्रथमसूत्रे वादव्याख्याने भाष्यकारो वक्ष्यति ।। **स चेत्यादि** । वादस्तावत् सूत्रकृता पृथगुपदिष्ट उपलक्षणार्थं सुखावबोधार्थमित्यर्थः । तेन च वादेन तत्त्वज्ञानार्थं व्यवहारः कर्तव्यः । व्यवहारश्च हेत्वाभासेभ्यो हेतोर्यद्विवेचनं तल्लक्षणः । अयं च वादस्यावान्तरप्रयोजनम् । मुख्यं तु प्रयोजनं तत्त्वज्ञानम्, परमवान्तरं प्रयोजनमपि सत् ।

289 व्यापारस्तत्र भाष्यकृता विवक्षितः। कया हेतुभूतया? **असाधारणतया**। वादैकसाध्यतया वादेनैव हि हेत्वाभासेभ्यो हेतोर्विवेकः कर्तुं शक्यते न त्वन्येन 290 केनचित्। जल्पस्तु वादविशेष एवेति वक्ष्यति भाष्यकारः। **विचारविषयो हि विविच्य दर्शित इति**। न्यायो न्यायाभासश्च विचारविषयो दर्शित इत्यर्थः।

**परीक्षापूर्वरूपमित्यादिवाक्यस्य** व्याख्या। परीक्षायास्तर्कापरनामिकायाः पूर्वरूपं कारणरूपमङ्गरूपमित्यर्थः। **संशयं** प्रतीतमेव। **दर्शयितुं** प्रतिपादयितुम्। **तत्कारणतया** संशयकारणतया। **व्याख्यातृविप्रतिपत्तिमाह**। इदमुक्तं भवति। परीक्षा किल तर्कः। स च संशयपूर्वक एव प्रवर्तते। संशयोऽप्यत्र विप्रतिपत्तिपूर्वकः। यत एके प्रतिपक्षस्थापनाहीना हि वितण्डोच्यते इत्यादि प्रतिपादयन्ति। तदपरे तु वितण्ड्यते आहन्यतेऽनयेति प्रतिपादयन्ति। अतो विप्रतिपत्तिसद्भावात् सन्दिह्यते किमियं वितण्डा सप्रयोजना उत निष्प्रयोजनेति।

**परीक्षायाः प्रयोजनमाह** [इति] **तत्र यदीत्यादिना प्रयोजनव्याप्तिरित्येतदन्तेन** टीकावाक्येन परीक्षायाः प्रयोजनमाह टीकाकार इत्यर्थः॥

टीयाम्॥ **अवयवव्युत्पत्त्यापीति**। वितण्ड्यते आहन्यतेऽनयेत्येवंरूपया॥

292 उने॥ **ननु न हि यदेवेत्यादि**। अयमत्र भावः। एतस्मिन्नपि पक्षे चतुर्वर्गं चेत् प्रतिपद्यते सोऽस्य पक्ष इति वार्त्तिकम्। तदक्षरमेवानुवदता टीकाकृता यदुक्तम्, तत्र प्रतिपद्यते इत्यस्य क्रियापदस्य यदि प्रत्येतीत्ययमर्थो मतः, तदेदमायातम्। यदुत यत्किमपि प्रतीयते तत्सर्वमभ्युपगम्यते। न चैतद् युक्तम्। यतो वादिना प्रतिवादिसंबन्धिवचनस्यार्थः प्रतीयत इति कृत्वा असावभ्युपगन्तव्यः प्राप्तः। तथा च मतानुज्ञा। अथ न प्रतीयते, यथा सति 292 अज्ञानं निग्रहस्थानमनुषज्यते इत्याशङ्क्योक्तं **प्रतिपत्तिरभ्युपगम इह विवक्षित इति**। कोऽभिप्रायः? प्रतिपद्यत इत्यस्य क्रियापदस्याभ्युपगच्छतीत्ययं पर्यायोऽत्र दातव्यो न तु प्रत्येतीत्यर्थः। **तस्य ज्ञाप्यत्वादितीति**। अयमत्र शङ्कार्थः। यो हि साध्यधर्मविशिष्टतया ज्ञापयितुमिष्यते धर्मी स एव पक्षः। न तु यावतैवाभ्युपगम्यते तावतैव पक्षः।

294 **ननु तथाप्यतिव्याप्तिरेवेतीति**। अयमत्र भावः। यद्यपि **एतच्च क्वचिदि**त्यादिना **अदृष्टान्तता स्यादित्येतदन्तेन** अव्याप्तिः परिहृता टीकाकृता, तथाप्यतिव्याप्तिस्तदवस्थैव। यतो बहवोऽर्थाः सन्ति दर्शनाविघातहेतवः। ते सर्वेऽपि दृष्टान्ताः प्रसज्यन्त इत्यतिव्याप्तिः।

47 **संमुग्धवार्त्तिकार्थं** [५८७ख] **विवेचयतीति**। संमुग्धं च तद् वार्त्तिकं च। तस्यार्थं विवेचयति विविक्तं करोति। कोऽभिप्रायः? **उदाहरणसूत्र** व्याहन्यते इति यद् वार्त्तिकं तत् संमुग्धं सन्दिग्धार्थम्। कथम्? किं यदग्रे—

साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणम्। [१.१.३६]

इत्युदाहरणसूत्रं तद् दृष्टान्तः प्रत्यक्षविषयोऽर्थ इति दृष्टान्तलक्षणे वर्ण्यमाने व्याहन्यते, उत यत् तेषु तेषु अस्यैव शास्त्रस्य प्रदेशेषु अतीन्द्रियदृष्टान्तानां
294 सूत्रणं तद् व्याहन्यते इत्येवं संमुग्धार्थमिदं वार्त्तिकम् ।। भाष्यं **भग्नमेवेदमिति** । यदा हि सर्वप्रमाणविषयोऽर्थो दृष्टान्तो जातः, तदा दृष्टान्तः प्रत्यक्षविषयोऽर्थ इति भाष्यवाक्यं निरभिधेयमेव जातमित्यर्थः । **अनुमानाश्रयतामुक्त्वापीति** । तदाश्रयौ तस्मिन् सति स्यातामनुमानागमावित्यनेन वचसा । **लिङ्गस्य पक्षाश्रयत्वादिति** । अनुमानं हि लिङ्गमुच्यते । लिङ्गं च पक्षमेवाश्रयते न तु दृष्टान्तम् । अतः कथमनुमानाश्रयता दृष्टान्तस्य । **यथाश्रुतं बह्वाकुलयतीति** । पूर्वं प्रत्यक्षमर्थमनुमिमीते इति यदि यथाश्रुतं व्याख्यायते तदा अतिप्रसङ्गः । न हि पूर्वदृष्टं सर्वमनुमिमीते । अतो दृष्टान्तपरतया व्याख्यातम् ।

**संबन्धमात्रग्रहणविषयतामात्रेणेति** । संबन्धमात्रस्य संकेतापरनाम्नो ग्रहणं तस्य विषयः गवादिरर्थः । तस्य भावस्तत्ता । सैव केवला संबन्धमात्रग्रहणविषयतामात्रं तेन । अयमत्र भावः । सङ्केतग्रहणसमये योऽर्थो गवादिर्बुद्धौ
296 रुपदर्श्यते स किल शब्दे दृष्टान्त उच्यते । **तत्प्रामाण्ये** इति । तस्य शब्दस्य प्रामाण्ये । **तद्विषयगोचरानुमानाभिप्रायेणेति** । तस्य शब्दस्य विषयः स्वर्गादिः । तद्गोचरं यदनुमानम्, तदभिप्रायेण । तथा हि, शब्दस्यापि प्रामाण्यं तदा निश्चीयते यदा तत्परिच्छेद्यं स्वर्गादिकमनुमानान्निश्चीयते । अनुमानं चेदम् । सतां प्रवृत्तिः फलवती सत्प्रवृत्तित्वात् । येत्थं सेत्थम्, यथोभयसंप्रतिपन्ना सा । सत्प्रवृत्तिश्चेयं दानादिरूपा । तस्मात् फलवतीति ।। **पूर्वज्ञातं चार्थं परस्मै**
296 **आचष्टे** इत्यादि । अपूर्वप्रतिपन्नसङ्केतो ह्यर्थः परस्मै प्रतिपाद्यते इति हि वदता वार्त्तिककारेण । यत्र सङ्केतो गृह्यते स एव शब्दे दृष्टान्त इत्युक्तमित्यर्थः । ततश्च व्याख्यानान्तरनिरासः सिद्धः ।।

297 **अनभ्युपगमसमुच्चयं निराकुर्वन्निति** । अनभ्युपगमानां समुच्चयोऽनभ्युपगमसमुच्चयः । अनेन च वादिना अयमर्थो नाभ्युपगतोऽनेन च न प्रतिपन्नोऽनेन च न स्वीकृत इत्यादिरूपः । तं निराकुर्वन् । कोऽभिप्रायः ? अनभ्युपगमस्तावत् सर्वथा निराक्रियते व्यवस्थाशब्देन । अभ्युपगमस्तु एकस्य द्वयोर्बहूनां सर्वेषां वा वादिनां भवत्वित्यर्थः । **अधिकरणसिद्धान्तेन हि** इत्यादि । अधि-
198 करणसिद्धान्तेनेति विशेष्यपदम् । **फलेन विषयेण वेति** तु विशेषणपदे । ततोऽधिकरणसिद्धान्तेन फलरूपेण विषयरूपेण वा कृत्वा पक्षधर्मता फलवती विषयवती वा स्यात् । अयमर्थः । येयं धूमवत्त्वादेर्हेतोः पक्षधर्मता सा नियतदेशावच्छिन्न[५८८ क]वह्निविषया, नियतदेशावच्छिन्नवह्निप्रतीतिलक्षणफलवती वा अधिकरणसिद्धान्तबलेन सिध्यतीति ।।

299 **पक्षे कथं व्यवस्थापयेदिति** । पक्षधर्मतामिति शेषः ।। **पक्षधर्मताफलविषयतयेति** । पक्षधर्मतायाः फलं विषयो वा अधिकरणसिद्धान्त इत्यनेन

रूपेणावश्यं व्युत्पादनीय इत्यर्थः । ननु फलं विषयो वाऽधिकरणसिद्धान्त इति किमर्थं द्वयोपादानम् ? फलमधिकरणसिद्धान्त इत्येतावतैव पूर्यते, विषयोऽधिकरणसिद्धान्त इत्येतावतैव वा । अत्रोच्यते । अभ्युपगम्यमानोऽर्थः सिद्धान्तः । अर्थस्य वाभ्युपगमः सिद्धान्त इति सामान्यसिद्धान्तलक्षणद्वयापेक्षयेदं द्वितयमुक्तम् । यतोऽभ्युपगम्यमानोऽर्थः सिद्धान्त इत्यत्र पक्षे यः परिच्छेद्योऽर्थः स सिद्धान्तः । स च विषय एव । अर्थस्य वा अभ्युपगमः सिद्धान्त इत्यत्र तु पक्षे प्रतीतिलक्षणं फलं सिद्धान्तः, अभ्युपगमस्य प्रतीतित्वात् ।।

300 **भाक्त्या वृत्त्येति** । उभयत्रोपमाने उपमेये च भजनाद् भक्तिः सादृश्यम् । तत्र भवा भाक्ती पूर्वपदस्मृत्यपेक्षान्यपदप्रत्ययः स्मृत्यनुग्रहेण प्रतिसन्धीयमानो विशेषप्रतिपत्तिहेतुर्वाक्यमिति वार्त्तिकटीकयोः क्रमेण व्याख्यानलवः क्रियते ।

49.9 **समूहनिबन्धनमिति** । समूहस्य निबन्धनं कारणमेककार्यत्वम् । अयमत्र भावः । एकस्य कस्यचिद् विशिष्टस्य वस्तुनः प्रतिपादनाय पदानि मिलित्वा वाक्यं

49.14 भवन्ति । **न चैते प्रत्येकं पदमिति** । यदा वर्णाः प्रत्येकं पदं न भवन्ति, तदा कथमेतदीयोऽनुभवो विशेष्यं बोधयति ? **श्रोत्रज** इति । अत्र विशेष्यं बोधयतीत्यध्याहारः । **स्वकार्यसंस्कार्यविरोधिनीनामिति** । [१]स्मृतिः संस्कारं जनयति । संस्कारश्च संस्कारश्च तां विनाशयति । अतः कथं स्मृतीनां सहभावः ?

49.18 **संबन्धसंवेदनेत्यादेर्वाक्यस्यायमर्थः** । संबन्धसंवेदनेन पूर्वकालभाविना सङ्केतज्ञानेन आहितो यः संस्कारस्तस्योद्बोधः पदस्मरणलक्षणसहकारिलाभः । तस्य यः समयस्तस्मिन् जन्म यस्य संस्कारस्य स तथा । तेन विनाशादिति योगः ।

49.19 पुनः कीदृशेनेत्युच्यते—**स्वजनितेन** । आसादितस्मृत्यनुभवरूपवैचित्र्यो यः प्रत्ययस्तज्जनितेन । **संस्कारेणेति** प्रतीतार्थम् । संबन्धस्मृतेरेवंविधं पदं प्रागपि मया पृथुबुध्नोदराकारपदार्थवाचकत्वेनावधारितमेवंरूपाया उत्पत्तिसमये विनाशात् स्मृत्यनुभवरूपवैचित्र्योपलक्षितप्रत्ययस्य ।

49.20 **पदार्थाविबोधकत्वानुपपत्तेरिति** । इदमुक्तं भवति । आदौ स्मृत्यनुभवरूपैकविचित्रप्रत्ययोत्पादः । तदनन्तरक्षणे च स्मृत्यनुभवरूपैकविचित्रप्रत्ययजन्यस्य संस्कारस्योत्पादः । अस्मिन्नेव च क्षणे पदस्मरणस्योत्पादः । एतच्च पदस्मरणं संबन्धसंवेदनाहितसंस्कारस्य संबन्धस्मृतिं जनयतः सतः सहकारीत्युच्यते । ततोऽग्रेतने क्षणे संबन्धसंवेदनाहितसंस्कारपदस्मरणाभ्यां संबन्धस्मृतिर्युज्यते । अस्मिन्नेव क्षणे स्मृत्यनुभवरूपवैचित्र्योपलक्षितः प्रत्ययः स्वजनितेन संस्कारेण विनाश्यते । ततोऽसौ विनष्टः सन् कथं पदार्थाविबोधको [५८८ ख] नाम ? यदा च पदार्थस्यापि न बोधकस्तदा कथं वाक्यार्थबोधको

49.20 भविष्यतीति ? **तस्मात् स्मृतिरेव प्रत्यय** इति ।।

---

१. स्मृतिः स्मृतिः संस्कारं...संस्कारश्च संस्कारश्च तां MS,

49.1 **अन्त्यपदप्रत्यय** इत्यत्र वार्त्तिकशकले प्रत्ययशब्दवाच्या पदविषया स्मृति-
49.21 रेवेत्यर्थः। **स्मर्यमाण एवेति**। एवकारोऽनुभूयमानतां व्यवच्छिनत्ति। **तस्येति**।
वेदाङ्गोपाङ्गज्ञानसंस्कृतस्य छात्रस्य। **आकाङ्क्षायोग्यतासन्निधानावधारणादि-**
**व्यवहिते** इति। आकाङ्क्षादीनामवधारणं मनसा निश्चयः। आदिशब्दात्
पूर्वं ययानुपूर्व्या यानि पदानि श्रुतानि तानि तत्सदृशयैक[या]नुपूर्व्या तत्सदृश-
पदस्मृतौ आकाङ्क्षादीनां स्मरणं गृह्यते। ताभ्यां व्यवहिते वाक्यार्थज्ञाने तत्र

अन्वितस्याभिधानार्थमुक्तार्थघटनाय च।
प्रतियोगिषु जिज्ञासायामाकाङ्क्षेति गीयते॥

मुख्यवृत्तीनां जघन्यवृत्तीनां च प्रयोगे योऽर्थो यत्र संबन्धित्वेनोपपन्नः स
संबन्धार्हो योग्य इत्युच्यते। तद्भावो योग्यता। तथा हि,

सामान्येनैव योग्यत्वं लोके यदवधारितम्।
तदन्विताभिधानस्य व्युत्पत्तावुपलक्षणम्॥

50.1 योग्यस्याकाङ्क्षितस्य यदानन्तर्यं स सन्निधिः। **स्मर्यमाणपूर्वपदापेक्ष** इति।
अन्त्यपदप्रत्यय इति योगः। ननु विशेष्यविशेषणवाचकपदस्मरणे न युगप-
दुत्पद्येते। अतः कथमिदमुक्तं पूर्वपदस्मृत्यपेक्षोऽन्त्यपदप्रत्यय इत्याशङ्क्याह—
50.1 **यद्यपीत्यादि**।

युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति [१.१.१६]

वचनाद् यद्यपि विशेष्यविशेषणवाचकपदविषयाणि स्मरणानि न सह संभवन्ति,
तथापि पूर्वं निरन्तरस्मृतिसन्तानसमारूढानि पश्चादेकस्यां स्मृतौ समारूढानि
सन्ति पदानि परस्परापेक्षाणि वर्तन्ते। तथा चैकस्मिन्नेव स्मार्ते ज्ञाने विशेषण-
विशेष्यपदे स्मर्यमाणे विशिष्टमर्थमवगमयतः। परं विशिष्यपदमपेक्षकं विशेषण-
50.3 पदं चापेक्ष्यम्॥ एतदेवाह—**तथा च स्मर्यमाणं विशेष्यपदं विशेषणपदापेक्षं**
50.4 **विशिष्टमर्थमवगमयतीति** गतार्थम्। **पदतदर्थसंबन्धबोधेनेति**। पदपदार्थयोः
सङ्केतस्मरणेनेत्यर्थः। **पदमालाप्रवृत्तेति**। स्मर्यमाणेति शेषः। **ज्वलन-**
**मिति**। ज्वलनक्रिया लक्षणम्। **पदार्थस्मृतिसंवेदनयोरिति**। पदार्थस्मरण-
सङ्केतस्मरणयोरित्यर्थः॥

अथैतद्वार्त्तिकटीकायाम् उदयने किञ्चिल्लिख्यते। ननु सोमेन यजेत इति
कथं क्रियोदाहरणम्? यावता सोमपदस्य प्रातिपदिकत्वात् प्रातिपदिकार्थोदा-
301 हरणमेवेदं भवत्वित्याशङ्क्याह—**सोमपदस्य कर्मनामधेयत्वादिति**। सोमलक्षणं
पदं यागाभिधानक्रियावाचकमेवेत्यर्थः। नन्वेवमपि कारकोदाहरणं स्यात्
सोमेनेति तृतीयायाः श्रवणादित्याशङ्क्याह—**धात्वर्थमात्रविवक्षया च कारकात्**
**पृथगभिधानमिति** सुगमम्॥ **गोदोहनेनेति** कथं कारकोदाहरणम्, यावता
अप्प्रणयनलक्षणक्रियायाः श्रवणात्—क्रियोदाहरणमेवेदमस्त्वित्याशङ्क्याह—
अप्प्रणयनस्य वाक्यान्तरप्राप्तत्वादिति—

चमसेनापः प्रणयेत्

इत्येवं लक्षणेन वाक्या[ ५८९ क ]न्तरेणाप्यपां प्रणयनं सिद्धं यतः, अतो न क्रियोदाहरणमिदम् ॥

303 **अवाक्यभूता अपीति** । दशदाडिमानि षडपूपा इत्यादयोऽपि शब्दा अवाक्यभूता यं कञ्चन विशिष्टमर्थमभिदधतीत्यभिप्रायः प्रश्नयितुरज्ञस्य । **प्रत्ययस्य प्राधान्यं निराकुर्वन्नेवेति** । अन्त्यपदप्रत्यय इत्यत्र प्रत्ययस्य न प्राधान्यं किं त्वन्त्यपदस्य । प्रतीयमानं ह्यन्त्यपदं वाक्यम्, न तु तस्य सम्बन्धिप्रत्ययः । **विशेषणासिद्धिं परिहरन्नाहेति** । अन्त्यपदप्रत्यय इत्यत्र ह्यन्त्यं पदं विशेष्यम्, प्रत्ययस्तु विशेषणम् । स च यद्यनुभवरूपो विवक्षितः तदा न सिद्धिर्विशेषणस्य । न हि क्रमबद्धवर्णसमुदायः पदं श्रवणेन्द्रियजनितानुभवगोचरः संभवति, आशुतरविनाशितया वर्णानां समुदायस्याभावात् । अतस्तां परिहरन्नाह—स्मृत्यनुभवयोस्तु स्यात् सहभाव इत्यनुषञ्जनीयमिति । उपान्त्यान्त्यवर्णस्मृत्यनुभवयोः स्यादित्येवंरूपस्य टीकावाक्यस्य पुरतः सहभाव इत्येवंरूपाण्यक्षराणि संबन्धनीयानीत्यर्थः ॥

**वर्णानुभवान्तराले** इति । वर्णयोरनुभवौ वर्णानुभवौ तयोरन्तराले ॥ **उक्तयुक्त्येति** । न चैतावता अर्थप्रत्यय इत्येवंलक्षणया ॥ **कारणसमुच्चयवशादिति** । संस्कारश्रवणेन्द्रियलक्षणयोः स्मृत्यनुभवकारणयोः समुच्चयवशात् । **विषयसमुच्चयवत** इति । सन्तोऽसन्तश्च वर्णा विषयास्तेषां यः समुच्चयस्तद्वतः प्रत्ययस्य । **स्वरूपसमुच्चयमिति** । एकस्यापि प्रत्ययस्य स्मृत्यनुभवरूपतया यद्वैचित्र्यम् ॥

306 **सङ्केतविशेषस्मरणे** इति । कर्तव्ये इति शेषः । **पदैकदेशवर्णानुभव** इति । पदैकदेशो योऽसावन्त्यवर्णस्तस्यानुभवः । अयं चेह स ग्राह्यो यष्टीकायाम् एकस्याप्यासादितस्मृत्यनुभवरूपवैचित्र्यस्येत्येवंविधवाक्यवाच्यः प्रत्ययः ॥ **तत्संस्कारस्येति** । संबन्धसंवेदनाहितस्य संस्कारस्य ॥ **तथा सत्यतिप्रसङ्गादिति** । यथान्त्यवर्णस्यानुभवः सहकारी, एवमाद्यस्य मध्यस्य वा वर्णस्यानुभवः सहकारी स्यात् पदैकदेशत्वाविशेषात् सर्ववर्णानामित्यर्थः । **पदत्वेन प्रतिसन्धानमिति** । एते वर्णाः पदमित्येवं रूपम् ॥ **एकप्रघट्टकेनापीति** । एककालमित्यर्थः ।

307 **विचित्रविज्ञानेनेति** । स्मृत्यनुभवैकरूपेण ॥ **खण्डशः पदभावेन प्रतिसन्धेया** इति । देवदत्त गामभ्याज शुक्लां दण्डेनेत्यादौ वर्णसमूहे श्रुते देवदत्तेत्यादयोऽवान्तरसमूहाः पदत्वेन प्रतिसन्धीयन्ते । तथा हि देवदत्तेत्येवं रूपं खण्डं प्रथमं पदत्वेन प्रतिसन्धीयते । तदनु गामिति । तदन्वभ्याजेति । ततोऽपि शुक्लामिति । ततोऽपि दण्डेनेति । एवं च यावन्ति यत्र पदानि तावन्ति तत्र पदप्रतिसन्धानानि भवन्ति । **अथ संबद्धत्वेन स्मर्तव्या** इति । एवंप्रकारवर्णसमुदायात्मकं पदं विवक्षितार्थवाचकं मया प्रागवधारितमित्येवं स्मर्तव्याः ॥

**इति कुतोऽनुभवावकाश** इति। आसादितस्मृत्यनुभवरूपवैचित्र्योऽनुभवस्तदा विनष्ट एवेत्यर्थः।

**अन्त्यवर्णानुभवस्येति**। आसादितस्मृत्यनुभवरूपवैचित्र्यस्य विज्ञानस्य। **तत्संस्कारपदप्रतिसन्धानयोरिति**। अन्त्यवर्णानुभवसंबधिनः संस्कारस्य पदप्रतिसन्धानस्य चोत्पद्यमानता। **असांदृष्टिकमिति**। अप्रातीतिकम्।

308 **अनुसन्धानात्मा भविष्यतीति**। य एवासादितस्मृत्यनुभवरूपवैचित्र्यः प्रत्ययः। स एव पदप्रतिसन्धानात्मा भविष्यतीत्यर्थः। ततश्च व्यवधायकस्य ......प्रतिसन्धानस्याभावाद् विनश्यदवस्थः सन्नसौ विचित्रप्रत्ययपदार्थावबोधकः स्वजनितया संबन्धस्मृत्या सह भविष्यतीति भावः। ततश्च यदुक्तं पदार्थावबोधकत्वानुपपत्तेरिति तदसिद्धम्। **तथाविधामिति**। यादृशी भवद्भिः प्रतिसन्धानानन्तरं कल्पिता तद्रूपा। **अन्यथेति**। विचित्रप्रत्ययस्यानुसन्धानात्मत्वसमयस्मृतिजनकत्वयोरनङ्गीकारे।

**स्मृतिरप्यशेषपदावगाहिन्येकैव स्वीकर्तव्येति**। अयमत्र भावः। अन्त्यपदप्रत्यय इत्येवंरूपशब्दवाच्या वाक्यार्थविबोधहेतुर्या स्मृतिर्भवद्भिरभ्युपगम्यते सा एकैव सती सर्वपदावगाहिनी स्वीकर्तव्या। अन्यथेतरपदवैयर्थ्यं प्रसज्येत। ततः किं तया कल्पितया? विचित्रानुभव एव पदप्रतिसन्धानात्मा सन् समयस्मृतिजननद्वारा भवतु पदार्थावबोधद्वारेण वाक्यार्थबोधकः॥ एवं च प्रतिसन्धानकल्पनाया अन्त्यपदप्रत्यय इत्येवंरूपशब्दवाच्यस्मृतिकल्पनायाश्च निरासः सिद्धो भवति। **न चानुभवासन्धानयोरेक कालतेति**। अन्त्यवर्णानुभवपदत्वप्रतिसन्धानयोरेककालता नेत्यर्थः॥ **तदनन्तरमेवेति**। अन्त्यवर्णानुभवानन्तरमेव। **इति सुष्ठूक्तं यदा पदार्थप्रत्यायने एवानुभवो न कारणमितीति**। यदा पदार्थप्रत्यायन एव पदानुभवो न कारणमिति टीकायां यदुक्तं तत् सुन्दरमुक्तमित्यर्थः॥

**तदौपयिकस्मृत्युत्पत्तौ तु कारणमेवेतीति**। उदयनस्यैव वाक्यमिदम्। अस्यार्थः। तदौपयिकी पदार्थप्रत्यायनौपयिकी या स्मृतिः वर्णानां खण्डशः पदत्वेन प्रतिसन्धानरूपा तस्या उत्पत्तौ पुनः कारणमेव विचित्रप्रत्ययः। **तेषामित्याकाङ्क्षादीनाम्**। यत्तु केचिद् आदिशब्दं प्रकरणपरिग्रहार्थमाचक्षते

309 तदयुक्तमित्येतदाह—**प्रकरणादय इति**। सुगमम्॥ **तत एव वाक्यार्थप्रतीतेरुत्पत्तेरिति**। उदयनेन टीकावाक्यमिदं गृहीतम्। अथैतदर्थविपर्यये स एव दोषमाह—**अनुत्पत्तौ त्वित्यादि**॥ **लक्षणदोष** इति। अन्त्यपदप्रत्ययो विशेषप्रतिपत्तिहेतुर्वाक्यमित्येवंविधस्य लक्षणस्यासिद्धिर्दोषः॥

**क्रमानुभूतानामपीति**। युगपदनुभूतानां त्वेकस्मृतिसमारोहे शङ्कैव नास्तीत्यपिशब्दार्थः॥ **क्रमेणापि नानुभूतानीति**। क्रमेणापि वर्णा एवानुभूता न तु

309 तदतिरिक्तं पदमित्यर्थः। **निरन्तरस्मृतिनिर्विषयीकृतानि तत एकस्मृतिसङ्कलितानीत्यर्थ** इति। अयमत्र भावः। यद्यपि पदं किमपि श्रोत्रजप्रत्ययेनैव प्रतिभाति, तथापि वर्णा एव खण्डशः पदभावेन स्मरणैः क्रमेणानुसन्धीयते। ततो निरन्तरैः स्मरणैः पूर्वपदानामाकलने पश्चाद् धटत एव एकस्मृतिसमारोहः [५६० क] सर्वेषां पदानाम्। **सन्निकर्षादिति**। नैकद्यात्। इदमत्रैदम्पर्यम्। पदस्मरणानामव्यवधानलक्षणं नैरन्तर्यं नेह ग्राह्यम्, तस्यासंभवात्। तथा हि प्रथमपदस्मरणानन्तरं सङ्केतस्मरणादिति। तदनुद्वितीयपदस्मरणम्। अतो नैकद्यमेवात्र पदस्मरणानां नैरन्तर्यं युज्यते॥

ननु **प्रत्येके**त्यादिकाया **व्यभिचरती**त्येतदन्ताया आशङ्काया अयमाशयः। किल केवलः कुम्भकारः घटं न घटयति। नापि केवलाश्चक्रादय इति घटकरणप्रवृत्तानां तेषां युक्तः परस्परानुग्रहः। अत्र तु पदकदम्बकं स्मृतमपि यावन्न पदार्थस्मृतिर्जाता तावन्न वाक्यार्थप्रतीतिं जनयति। पदार्थस्मृतिश्चेज्जाता तदा पदकदम्बकस्मरणमन्तरेणापि भवत्येव वाक्यार्थप्रतीतिरिति न युक्तः पदपदार्थस्मरणयोः परस्परानुग्रहो वाक्यार्थप्रतीतिजनने। ततश्च पदस्मरणं पदार्थस्मरण एवोपयुक्तम्, पदार्थास्तु केवलाः स्मर्यमाणा वाक्यार्थावगमोपयोगिन इति भट्टपक्षः।

312 अत्रैवाशङ्कावाक्ये तथाविध इत्यस्यायं पर्यायः। अन्वितपदोत्था **सर्वदा तत्प्रतीतिप्रसङ्गादिति**। यदि पदार्था एव गवादयो वाक्यार्थे प्रमाणं स्युः, तदा गवादीनां पदार्थानां सर्वदा विश्वस्मिन् सद्भावात् सर्वदैव वाक्यार्थप्रतीतिः स्यात्। **प्रकारान्तरेणापि स्मृतानामिति**। यदा पदैर्न स्मार्यन्ते पदार्था अपि तु सदृशदर्शनादिना स्मर्यन्ते तदापीत्यर्थः। **नापि त एव पदैः स्मारिता** इति। त एव पदार्था एव वाक्यार्थे प्रमाणं परं यदि पदैः स्मारिता भवन्ति। न तु सदृशदर्शनादिना स्मृताः। **पूर्ववत् प्रसङ्गादिति**। प्रकारान्तरेणापि स्मृतानां वाक्यार्थावगमकत्वप्राप्तेरित्यर्थः। तथा हि। यदा पदानि पदार्थस्मारण एवोपयोगीनि तदा पदार्था एव वाक्यार्थावबोधे प्रमाणमित्यायातम्। ततश्च
312 पदैर्वा स्मारिता भवन्तु सदृशदर्शनादिना वा को विशेषः? **तेषामिति**। पदानाम्।

**तथापीत्यादेरिति** चेदित्येतदन्तस्यायमाशयः। पदान्येव स्मर्यमाणानि वाक्यार्थप्रतीतौ कारणानि, पदार्थस्मृतिस्त्ववान्तरव्यापार इत्येवंविधे निश्चये को हेतुरिति। **असाधारणकारणत्वं पदानामिति**। गुणप्रधानभावनिगमनायां हेतुरिति योगः। **कारणत्वमेव नास्तीति**। वाक्ये हि ये पदानामर्थाः श्रूयन्ते केचिदतीताः केचिदनागताः। तयोश्चासत्त्वेन तुच्छत्वात् कारणत्वमात्रमपि न घटते। कुतोऽसाधारणकारणत्वं वाक्यार्थावगमं प्रति? एतद्दृष्टान्तबलेन च वर्तमानस्यापि वाक्यार्थावगमं प्रति जनकत्वं निराकरणीयम्।

**अतएव न तत्स्मृतिस्तेषां व्यापार इति ।** अतएव कारणत्वाभावादेव नैव तत्स्मृतिः पदार्थस्मृतिः तेषां पदार्थानां व्यापारोऽवान्तरव्यापारलक्षणः । यदि हि पदार्थानां कारणत्वं स्यात् तदा पदार्थस्मृतेर्युज्येताप्यवान्तरव्यापारत्वम् । तच्च निरस्तम् ।। **किं तु करणीभूतानां पदानामेवेति ।** पदार्थस्मृतिः पदानामेवावान्तरव्यापार इत्यर्थः ।।

313 **तथा चेत्यादेर्व्याकुलयतीत्येतदन्तस्य** व्याख्या । **तथा च** एवं च [ ५६० ख ] सति व्यापारस्य व्यभिचारः करणस्य निर्व्यापारावस्था । तमादाय स्वीकृत्य निर्व्यापारावस्थायां व्यभिचारो वाक्यार्थबोधनस्यानुत्पादनं स विद्यते येषां तानि तथा तेषामकरणत्वाभ्युपगमो विसंष्ठूलयति । अयमत्राभिप्रायः । यदि पदमाला पदार्थस्मरणावान्तरव्यापारविरहे वाक्यार्थावगमजनिका न भवतीति पदानामकरणत्वमभ्युपगम्यते भट्टैः, तदा यदेतल्लोकप्रसिद्धं दात्रादिकरणं तदपि दृढमुष्टिनिपीडनादिव्यापारवैधुर्ये न साधकतममिति न करणं स्यात् ।। **निष्पत्ति च भेदयितुं पुनः सिद्धिव्याख्यानमनुवदतीति । धर्मिणः सिसाधयिषितधर्मविशिष्टत्वं वास्तवमित्यर्थ** इत्यनेन हि टीकाकारवचसा सिद्धेरनन्तरमेव व्याख्यानं कृतम् । साम्प्रतं वास्तवो धर्मः सिद्धिरिति यत् पुनरपि सिद्धिव्याख्यानभणनं तन्निष्पत्ति सिद्धितः सकाशाद् भिन्नां कर्तुम् ।।

वार्त्तिके ।। **ते समाख्याशब्दैरभिधीयन्ते प्रतिज्ञादय इतीति ।।** तेऽवयवाः संज्ञाशब्दैः प्रतिपाद्यन्ते प्रतिज्ञादय इत्यनेन वचसा भाष्यकारेण ।।

टीयाम् ।। **आत्मादिप्रमेयप्रतिपादनोद्देशेनेति ।** आत्मादिप्रमेयप्रतिपादनविषयतया । **तन्नान्तरीयकतयेति ।** आत्मादिप्रमेयनान्तरीयकतया । **तस्येवेति ।** न्यायम् ।। **य** इति । न्यायः । **तत्प्रतिपादकागमप्रामाण्यनिश्चायको वेति ।** तस्यात्मादेः प्रमेयस्य प्रतिपादको य आगमः, तस्य प्रामाण्यनिश्चायको वा यो न्यायः । **तद्विषयागमप्रतिपादकस्य च परम्परयेति ।** आत्मादिप्रमेयगोचरो य आगमः, तस्य प्रतिपादको यो न्यायस्तस्याद्योऽवयवः प्रतिज्ञालक्षणः परम्परया आगमार्थविषयः । स हि आनन्तर्येणागमप्रामाण्यविषयः ।।

315 उने ।। **अलौकिकोपचारत्वात् प्रयोजनमाहेति ।** द्विविधो ह्युपचारो लौकिकस्तदितरश्च । तत्र यो लौकिक उपचारो रूढिनिष्पन्नः स प्रयोजनमन्तरेणैव प्रमा वर्तते । न हि कुशल इत्यादौ लक्षणा सप्रयोजना । यस्त्वलौकिक उपचारः स सप्रयोजन एव । गङ्गायां घोष इत्यादौ हि तटपावनत्वादिप्रतीतिं प्रयोजनत्वेनामनन्ति सन्तः । तत्र प्रतिज्ञाया आगमत्वेन य उपचारः सोऽलौकिक इत्यस्य प्रयोजनं ब्रूते टीकाकारः अर्थसंवादेनेत्यादिना । **दृढभूमिश्च संस्कार** इति । प्रतिपक्षसंस्कारेण च्यवयितुमशक्यो यः संस्कारः ।
315 स चानुग्रहः । कुत इत्याह—**आगमैकविषयत्वादिति ।** आगमेन सहैकविषयत्वात् तुल्यविषयत्वात् न्यायस्य ।।

टीयाम् ।। **न्यायमात्रवर्त्तिनी** । वह्निमानयं पर्वतनितम्ब इत्यादि लोकप्रसिद्धन्यायवर्त्तिनी । **अनुमानस्य न्यायानुग्राहकत्वमिति** । अनुमानशब्दवाच्यं सर्वत्र परामृश्यमानं लिङ्गम्, लिङ्गस्य वा परामर्शः । प्रथमपक्षे लिङ्गं विशेष्यम् । तत्परामर्शस्तु विशे[५९१क]षणम् । द्वितीयपक्षे तु विपर्ययः । **तत्खल्वित्यादिका उपचार** इत्येतदन्ता आशङ्का ।।

316 उने ।। **विषयतयेति** । अभिधेयतया ।। **दृश्यमानमिति** । न तु परामृश्यमानम् । अयमाशयः । योऽयं पर्वते प्रत्यक्षेण धूमो धूमवत्त्वादित्यनेन वचसा यः शैलसंबद्धः सन् हेतुतया अभिधीयते स एवानुमितिलक्षणं फलं साधयिष्यति । किं परामृश्यमानलिङ्गकल्पनया तथा चायं धूमवानित्यादिवचनगम्यया । लिङ्गदर्शनमात्रमित्यस्य पर्यायमाह—**दृश्यमानलिङ्गमात्रमितीति** । **संबन्धस्मृतिसहकारीति** । सम्बन्धस्मृतिः सहकारिणी यस्य लिङ्गदर्शनमात्रस्य तत् तथा ।।

टीयाम् ।। **तत्सहकारितेति** । सा संबन्धस्मृतिः सहकारिणी यस्य लिङ्गदर्शनमात्रस्य तत् तथा तस्य भावस्तत्ता ।।

317 उने ।। **द्वितीयदर्शनविषयलिङ्गप्रतिपादकमिति** । महानसप्रवृत्तधूमदर्शनापेक्षया द्वितीयं दर्शनं पर्वतनितम्बे धूमस्य । तस्य च विषयो धूमलक्षणमेव लिङ्गम् । तस्य प्रतिपादकं हेतुवचनं धूमवत्त्वादित्यादिकम्, न तु परामृश्यमानलिङ्गप्रतिपादकमिति ।।

टीयाम् ।। **कार्याभिमुखीकरणमिति** । स्मृतिलक्षणकार्यं प्रत्यभिमुखीभावः ।। **संबन्धस्मृतिहेतुव्यक्तिहेतुभावादिति** । संबन्धस्मृतेर्हेतुः संस्कारविशेषः । तस्य व्यक्तिः कार्याभिमुखीकरणम् । तस्यां हेतुभावाद् द्वितीयलिङ्गदर्शनस्य ।।

317 उने ।। **व्याख्यानं ग्रन्थान्तरानुरोधादस्फुटमिति** । यत्तु द्वितीयं लिङ्गदर्शनमित्यादिवार्त्तिकं संक्षिप्तमिति तदीयं व्याख्यानमपि टीकायां स्वल्पम् । अतो भावार्थः कथ्यते टीकाकृता ।।

टीयाम् । **शुद्धमपीति** । केवलं संबन्धस्मृतिरहितमित्यर्थः । **तत्प्रतिपादकस्येति** । यद्यपि द्वितीयलिङ्गदर्शनं प्रस्तुतम्, तथापीह तच्छब्देन द्वितीयलिङ्गदर्शनविषयो यो धूमादिः, स एव परामृश्यते । ततश्च तत्प्रतिपादकस्येति किमुक्तं भवति ? द्वितीयलिङ्गदर्शनविषयप्रतिपादकस्येति ।। अतएवाहोदयनः ।
317 **तद्विषयप्रतिपादकस्येत्यर्थः** इति सुबोधम् ।।

उने ।। **तस्य च व्याप्तिस्मृतिसहकारिता अनुमिताविति** । तस्य लिङ्गपरामर्शस्य व्याप्तिस्मृतिः सहकारिणी विनश्यदवस्था सती यस्य स तथा । तस्य भावस्तत्ता अनुमितौ फले कर्तव्ये । **द्वितीयेत्यादि** । द्वितीयलिङ्गदर्शनस्यापि विनश्यदवस्थस्य सतो व्याप्तिस्मृतेः सहकारिता व्याप्तिस्मृति-

सहकारिता । **परामर्शज्ञाने एव** । कोऽभिप्रायः ? द्वितीयलिङ्गदर्शनानन्तरं संबन्धस्मृतिरुत्पद्यते । ततश्च परामर्शं जनयन्त्या द्वितीयं लिङ्गदर्शनं विनश्यदवस्थं सत् सहकारि ।। तथा, परामर्शस्यानुमितिं जनयतो व्याप्तिस्मृतिर्विनश्यदवस्था सती सहकारिणीति । **उभयोरपीति** । द्वितीयलिङ्गदर्शनलिङ्गपरामर्शयोः । **तद्विषयस्य लिङ्गस्यापीति** । द्वितीयलिङ्गदर्शनलिङ्गपरामर्शविषयस्य लिङ्गस्याप्यनुमानत्वम् । **तदनुगृहीतस्य तद्वचनस्यापीति** । अभिधेयतया लिङ्गेनानुगृहीतस्य लिङ्गप्रतिपादकस्य वचनस्याप्यनुमानत्वम् ।।

318 **विपरीतमभि[५८१ख]हितमिति** । स्मृतिविषयस्य प्रत्यक्षतः पुनरुपदर्शनादिति यद् वार्त्तिकेऽभिहितं तस्य स्थाने प्रत्यक्षविषयस्य स्मृतितः पुनरुभयदर्शनादिति वक्तुमुचितमित्यर्थः । तथा हि, पूर्वं प्रत्यक्षपरिच्छिन्नो महानसादिर्दृष्टान्त उदाहरणकाले स्मृत्योपदर्शित इति सुप्रसिद्धम् ।।

टीयाम ।। **अविप्रतिपत्त्येति** । प्रत्यक्षत इत्यस्य वार्त्तिकस्यायं पर्यायः ।।

318 उने ।। **एकविषयत्वमिति** ।। यत्रैव महानसादौ दृष्टान्ते प्रत्यक्षं प्रवृत्तम्, तत्रैवोदाहरणवचनमपि संप्रति प्रवर्तते । **तद्वचनमपीति** । दृष्टान्तवचनम् । उदाहरणवचनापरनामकं दृष्टान्तं स्मारयतीति योगः ।।

वाके । **यथा तथेत्युपमानैकदेशे उपमानोपचारादुपमानमुपनय इतीति** । यथा तथेत्येवंरूपे उपमानस्यैकदेशे संपूर्णस्योपमानस्याध्यारोपादुपमानमुपनय इत्युक्तमित्यर्थः ।।

319 उने ।। **यथा शब्दतदर्थयोरिति** । यथाशब्दयथाशब्दार्थयोः ।।

टीयाम् ।। इति यथा तथेति प्रवर्तते इति । यद्यप्युपनये यथा शब्दो नास्ति तथापि यथाशब्दस्यार्थोऽस्त्येव । न हि यथाशब्दार्थापेक्षामन्तरेण तथाशब्दः प्रवर्तते । अव्याख्यातेऽपि निगमने यदिदं सोऽयं सर्वप्रमाणनिवेशेन
319 परमो न्याय इति श्रूयते इत्युक्तं वाचस्पतिना, तस्य फलं भावयन्नाह उदयनो **यद्यपीत्यादिना** ।

319 **जात्यभिप्रायेणेति** । अयमत्र भावः । प्रमाणजातिश्चतुष्प्रकारैव । सा च प्रतिज्ञादिचतुष्टयेऽपि चरितार्था । निगमननिवेशयोग्या तु पञ्चमी प्रमाणजातिर्न काचिदस्तीति । **तद्व्याख्यानादिति** । निगमनव्याख्यातात् ।

**मूलसमवायाभावादिति** । अयुतसिद्धानामित्यादिलक्षणलक्षितस्य समवायस्याभावादित्यर्थः । **सामर्थ्ये सति सहकारितया अन्यदपेक्षते इति** । घटकरणसमर्थो हि कुम्भकारः चक्रचीवरादिकमपेक्षते, न तु हस्तादिविकलो जातुचिदसमर्थः सन् ।।

टीयाम् ।। **विभज्यमानानामिति** । पृथकपृथग्विधीयमानानाम् ।।

320 उने ।। **परस्परव्याप्तेरिति** । सामर्थ्यमत्याकांक्षा, आकांक्षायां च सामर्थ्य-मित्येवंरूपायाः । **प्रयोजनाभेदेऽप्याकांक्षाविरहे वाक्यैकत्वं नास्तीति** ।

भगो वां विभजतु, पुषा वां विभजतु

इत्यादौ वाक्यद्वये विभागलक्षणमेकं प्रयोजनमस्ति, न तु आकांक्षा विद्यते स्वतन्त्रत्वाद् द्वयोरपि वाक्ययोः । अत एकवाक्यता नास्ति । **स्योनं ते** इत्यादि । अत्र संपूर्णमन्त्रपाठ एवम्—

स्योनं ते सदनं कृणोमि घृतस्य धारया सुषेवं कल्पयामि । तस्मिन् सीदामृते प्रतितिष्ठ व्रीहिणामेधः सुमनस्यमाने ।। इति ।

अस्यार्थः । स्योनं सुखतरं हे पुरोडाश, ते तव सदनं सीदन्त्यस्मिन्निति सदनं स्थानं कृणोमि करोमि । कया ? घृतस्य धारया । अयमर्थः चतुरस्र-द्वयङ्गुलप्रमाणैरष्टभिः कपालाभिधानघटकर्परखण्डैरश्वशफाकारं वर्तुलमाधारं कृत्वा तदुपरि पिष्टं निक्षिप्य घृतधारया पक्त्वा स्योनं ते इत्यादिना मन्त्रेण वरुणवृक्षविनिर्मितपात्रे विन्यस्येत । तद्वारुणपात्ररूपं सदनं सुषेवं सुखेन सेव्यते इति सुषेवं[५९२क] कल्पयामि । हे पुरोडाश, ते तस्मिन् सीद तत्रोपविश । अमृतेऽमृतरूपे प्रतितिष्ठ प्रतिष्ठां लभस्व । व्रीहिणा मेधः व्रीहिभिः पवित्रः सुमनस्यमाने शोभने इति ।

अत्र च कल्पयाम्यन्तस्य मन्त्रस्य पुरोडाशसदनकरणं प्रयोजनम् । सदन-करणमिति गृहकरणमुच्यते । तस्मिन्नित्यादिकस्य तु मन्त्रस्य पुरोडाशसादनं प्रयोजनम् । पुरोडाशोपवेशनं प्रयोजनमित्यर्थः । इति प्रयोजनानेकत्वात् सत्यामप्याकाङ्क्षयां वाक्यैकत्वं नास्ति ।

322 **वाक्येनैव परमिति**[1], वाक्येनैव केवलम् । **अनन्यथासिद्धप्रत्यक्षागमा-गोचराभिप्रायमिदमिति** । अनन्यथासिद्धौ साक्षात् स्वपरिच्छेदबोधकत्वेन प्रसिद्धौ यौ प्रत्यक्षागमौ तयोरगोचरोऽविषयो यो वेदप्रामाण्यादिरर्थस्तमभिप्रैति प्राप्नोति यत् तदनन्यथासिद्धप्रत्यक्षागमागोचराभिप्रायम् । **इदमिति** । परमत्वम् । इदमुक्तं भवति । घटादौ निधानादौ च लौकिकेऽर्थे प्रत्यक्षाप्तोपदेशौ साक्षाद् विप्रतिपन्नपुरुषप्रतिपादकौ । वेदप्रामाण्यादौ तु पञ्चावयवन्याय एव प्रति-पादकः ।।

ननु तत्रापि प्रत्यक्षादिकं प्रमाणं दृष्टान्तोपदर्शनादिद्वारेणानुग्राहकं समस्त्येव । सत्यम् । मुख्यवृत्त्या न्याय एव तत्र प्रतिपादकः, प्रत्यक्षादिकं तु न्यायोपाधिकम् । अतएवान्यथासिद्धं तत् । अन्यथासिद्धमिति कोऽर्थः ? साक्षादपरिच्छेदकम् । **अवयवानां पृथगभिधानमाक्षेप्तुं विकल्पयतीति** यदुक्तं टीकाकृता तत्र विकल्पं सप्रयोजनं व्याचष्टे **विकल्पो हीत्यादिना** । **अनुवाद-**

322 **विशेष** इति । अनेकप्रकारो ह्यनुवादः । तद्भेदश्चैष विकल्पः । विकल्प्य-

1. परो Pari. J. Bibl. omits it. Mark the difference with Śrīkaṇṭha.

मानो ह्यर्थः सिद्ध एवानूद्यते इत्यनुवादता विकल्पस्य। **तस्य प्रयोजनं विधिः प्रतिषेधो वेति।** विकल्प्यमानो ह्यर्थो विधीयते प्रतिषिध्यते वेत्यर्थः।

322 **आक्षेपावसरे इति।** पूर्वपक्षावसरे। **प्रतिषेध एवेति।** प्रयोजनमिति योगः। अवयवानां प्रमाणत्वं च निषिध्यत एवेति भावः। **उभयमपि विवक्षित्वा संमुग्धमुक्तमिति।** धर्मविशिष्टो धर्मी विशेष इति यदुक्तं टीकाकृता तत्र धर्मस्य विशेषणं किमपि नोक्तम्। तत्रायमाशयो यदुतात्र धर्मो लिङ्ग-लक्षणः साध्यलक्षणश्च ग्राह्यः। परं पञ्चावयवाद् वाक्यात् साक्षाल्लिङ्ग-लक्षणधर्मविशिष्टो धर्मी प्रतीयते। तथा चेदानीमेवोक्तं टीकाकृता तदत्र समस्तरूपसमापन्नलिङ्गप्रतिपादनमेकं प्रयोजनमिति वाक्येन लिङ्गलक्षणधर्म-विशिष्टधर्मिद्वारेण तु स एव धर्मी साध्यधर्मविशिष्टः परिच्छिद्यते इति।

॥ इत्यवयवावचूर्णिः ॥

323 **दृष्टो हि सामान्यशब्देनापीत्यादेरयमाशयः।** प्रमेयादिः सामान्यशब्दोऽपि द्वादशविधप्रमेयसंग्राहकत्वेनैव विवक्षितः सूत्रकृता तज्ज्ञानस्य मोक्षाधिगमं प्रत्य-त्यन्तोपयोगित्वलक्षणात् कारणात्। न चैतावता संशयादयो न प्रमेयाः एवं

324 प्रमाणपदेन कुत्रचित्कारणादसंगृहीतोऽपि तर्कः प्रमाणं भविष्यतीति। **अतए-** [५९२ ख]**वेति।** यत एव सामान्यशब्देन क्वचिदसंग्रहः॥

टीयाम्। **संशयादिवद्गुणत्वेनात्मलिङ्गत्वादिति।** तर्कज्ञानं क्वचिदाश्रितम्, गुणत्वात् संशयादिवदित्येवमुत्पत्तिमत्त्वेन वेति। तर्कज्ञानं क्वचिदाश्रितम्, उत्पत्तिमत्त्वात् संशयादिवत्। **अनिश्चायकत्वमिति।** आत्मनोऽपरिच्छेद-कत्वम्। **प्रमाणविषयविभागहेतुतयेति।** अनिश्चायकत्वमिति योगः। यतोऽयं प्रमाणस्य विषयमात्रं विभजते, ततो न निश्चायकः।

324 उने॥ **इयमितिकर्तव्यतेति।** तर्कलक्षणा। **तदीयविषये इति।** तस्य प्रमाणस्य संबन्धिनि विषये। **तदपेक्षत्वादिति।** तस्य प्रमाणस्य संबन्धिनी अपेक्षा यस्य तर्कस्य स तथा। तस्य भावस्तत्त्वं तस्मादित्यर्थः। **अहार्या-**

325 **रोपरूपत्वादिति।** अहार्यं केनाप्यपनेतुमशक्यम्, आरोपलक्षणं प्रसङ्गलक्षणं

328 रूपं यस्य स तथा। तस्य भावस्तत्त्वं तस्मात्। **केवलस्येति।** तर्कविकलस्य। **प्रसङ्गतद्विपर्ययपिण्डे एव प्रामाण्यं पर्यवस्येदिति।** यथा प्रसङ्गस्तर्कापरनामा विपर्यये पर्यवस्यति सर्वो हि प्रसङ्गो विपर्ययपर्यवसान इति वचनात्, तथा सर्वेषां प्रमाणानां प्रामाण्यं विपर्ययेष्वेव पर्यवस्येत्॥

328 **एवमेतदिति॥** प्रमाणस्यापि केवलस्य न कृतार्थत्वमिति यदुक्तं भवता

328 तत्सत्यमित्यर्थः। **सेतिकर्तव्यताकस्यैव सर्वत्र करणत्वादिति।** सव्यापारस्यैव वस्तुनः सर्वत्र साधकतमत्वादित्यर्थः। अतः प्रमाणमपि प्रमां प्रति साधकतमं

तर्कलक्षणेतिकर्तव्यतासहितमेव सत् ।। अयं विभाग इति । प्रमाणं करणं तर्कस्त्वितिकर्तव्यता इत्येवंलक्षणः ।।

329 वार्त्तिकस्येति । इदं युक्तमिदमयुक्तमित्येवंरूपस्य । **अतः प्रसङ्गरूपव्युत्पादनस्य वार्त्तिकेनाविरोध** इति । यतोऽयमर्थो वार्त्तिकस्य जातोऽतः प्रसङ्गरुपतया यद् व्युत्पादनं तर्कस्य टीकाकृता कृतम्—**अस्ति हि प्रसङ्ग** इत्यादिना ग्रन्थेन, तस्यानेन प्रस्तुतेन वार्त्तिकेन महाविरोधः । एतदपि वार्त्तिकं तर्कस्य प्रसङ्गरूपतामेवाभिधत्ते इति भावः ।। भाष्यं तु **प्रसङ्गे स्फुटमेवेति । यदि कृतकेन**

329 **हेतुना निर्वर्त्यत** इत्यादिकं भाष्यं सुव्यक्तमेव प्रसङ्गरूपतामभिधत्ते तर्कस्येत्यर्थः । **अयुक्तांशस्यापि संशयास्पदत्वादिति** । संशयज्ञानं हि स्थाणुर्वा पुरुषो वेति युक्तायुक्तविषयम्, अन्यतरस्य सत्यत्वेन युक्तत्वात् । तदितरस्यासत्यत्वेनायुक्तत्वात् । तर्कज्ञानं तु युक्तांशमेव संभावनां नयतीति युक्तांशविषयमेव ।।

**विरुद्धव्युदासरूपेणेति** । विरुद्धस्यासत्यस्य पक्षस्य यो व्युदासो निराकरणं तद्रूपेण । **तद्विषये प्रमाणानुकूल्येन तर्कस्यापि तद्विषयत्वमिति भ्रान्तिमाशङ्क्य निराकरोतीति** । तस्मिन् प्रमाणसंबन्धिनि विषये यत् प्रमाणानुकूल्यं तर्कस्य तेन कृत्वा तर्कस्यापि तद्विषयत्वं प्रमाणविषयविषयत्वमिति कृत्वा भ्रान्तिरस्ति, तर्कस्यापि प्रमाणविषयनिश्चायकत्वं भविष्यत्यलं प्रमाणेनेत्येवंरूपा । अतस्तामाशङ्क्य निराकरोति—**स्वविषयद्वा**[५९३ क]**रापीति** । न केवलं विपर्ययपरतन्त्रतया प्रामाण्यं निराकृतमित्यपिशब्दार्थः ।।

टीयाम् ।। **अस्ति हि प्रसङ्ग** इति । तर्कापरनामा प्रसङ्गः समस्तीत्यर्थः । **न प्रसङ्गहेतुरिति** । प्रसङ्गश्चासौ हेतुश्च प्रसङ्गहेतुः, स नास्ति ।। किमुक्तं भवति ? प्रसज्यते यः स प्रसङ्गस्तथाविधो हेतुर्नास्ति प्रसज्यमानो हेतुर्नास्तीत्यर्थः ।।

उने ।। **प्रसङ्गः । प्रसज्यमानो हेतुर्लिङ्गमिति** । न प्रसङ्गहेतुरित्येतस्य व्याख्यानवाक्यमिदम् । तत्र नञः प्रतीतार्थत्वात् पर्यायो न दत्तः । प्रसङ्ग इत्येतस्य तु प्रसज्यमान इति पर्यायः । हेतुरित्येतस्य तु तल्लिङ्गमिति पर्यायः । **न हि यदेव विद्यते तदेव दृश्यते इत्यस्ति नियम** इति । यद्विद्यते तद्दृश्यत एवेति नियमो नास्ति । पिशाचादेर्विद्यमानस्यात्यदृश्यमानत्वादित्यर्थः । **नास्तीति फलद्वारेण तर्कस्यानुग्राह्यं प्रमाणमिति** । नास्ति घट इत्येवंरूपं यत् प्रत्यक्षप्रमाणस्य फलं तत् तर्कसहायस्यैवेत्यर्थः ।।

**कैवल्यस्वरूपविप्रतिपत्तेस्तद्विवृणोतीति** । भूतलकैवल्यं हि प्रति परे विप्रतिपद्यन्ते । तथा हि सांख्याः तिरोभूतघटविशिष्टत्वं कैवल्यं भूतलस्येति प्रतिपन्नाः । बौद्धमते तु घटाभावः कोऽपि वास्तवो नास्त्येव । तद्वत् प्राभाकरमतेति । ततः

तन्मते एतदेव कैवल्यं यत् तत्र घटेन न भूयते इति कैवल्यस्वरूपं प्रति विप्रतिपत्तिसद्भावात् कैवल्यं विवृणोति-नेह घट इत्यनेनोल्लेखेन ।।

332 **यजेतेत्यादेरवतार** इत्येतदन्तस्यायमर्थः । यजेतेत्यनेन हि पदेनोभयमुपात्तं यागश्च धात्वर्थलक्षणो यजिलक्षणप्रकृतिवाच्यः, विधिश्च इतप्रत्ययाभिधेयः । तथा भाव्यश्चासौ न तु सिद्धः, पुरुषेण निष्पाद्यमानत्वाद् यागस्य । ततश्च विधिना सहैकपदोपात्तत्वाद् भाव्यत्वाच्च यागलक्षणे धात्वर्थः साध्यो भवतु, आहोस्वित् पुरुषार्थत्वात् स्वर्गः साध्य इत्येवंरूपे संशये सति तर्कस्य यदि साध्यो धात्वर्थ इत्यादिकस्यानन्तरमेव भण्यमानस्यावतारः ।।

उपदेष्टुराप्तत्वमित्यादौ वाक्ये **न स्यादिति** सर्वत्र योज्यते । तत्रोपदेष्टुराप्तत्वं न स्यात् पुरुषार्थानुपदेशकत्वात् । दुःखरूपो हि यागः । न च दुःखं पुरुषार्थ इति सुप्रतीतम् । विधेश्चेष्टाभ्युपायत्वं न स्याद् यागस्यानिष्टत्वात् । स्वर्गो हीष्टो न यज्ञः । वाक्यस्य तदभिधायकत्वमिष्टाभ्युपायाभिधायकत्वं न स्यात्, अनिष्टरूपयागप्रतिपादकत्वात् । प्रेक्षावतां च प्रवृत्तिर्न स्यात्, इष्टानभ्युपाये तेषामप्रवृत्तेः । इतरथा प्रेक्षावत्ताक्षतिः ।

333 **प्रमाणमिति** । आगमरूपम् । तथा हि, **समानपदोपात्तोऽपीत्यादिना** ग्रन्थेन **प्रवर्त्तते** इत्येतदन्तेनागमप्रमाणस्यैव तर्केणानुज्ञायमानता टीकाकृता प्रदर्शिता । **धात्वर्थस्य वा तत्फलत्वे** इति । यागलक्षणस्य धात्त्वर्थस्य यागभावनाफलत्वे । **कश्चिद्विरोध** इति । अयमत्र भावः । संशयवादिना हि धात्वर्थस्य साध्यत्वे समानपदोपात्तत्वं भाव्यत्वं चेति हेतुद्वयं यदुपात्तं तत् स्वर्गस्यापि साध्यतया न विरुद्धं या[५६३ ख]गभावनायाः स्वर्गफलत्वेऽपि तस्य हेतुद्वयस्योपपद्यमानत्वात् । **तदविरोधेनेति** । तयोः समानपदोपात्तत्वभाव्यत्वयोरविरोधेन । **स्वर्गफलत्वं युक्तमिति** । यागभावनायाः स्वर्गफलत्वं युक्तमिति योगः ।।

ननु तदविरोधस्य तुल्यत्वाद् धात्वर्थ एव यागलक्षणः फलं भविष्यति यागभावनाया इति भ्रान्तिमपनुदन्नाह—**धात्वर्थस्य त्वित्यादि** । **बहुविरुद्धतयेति** । उपदेष्टुराप्तत्वे न स्यादित्यादिकया अनन्तरोक्तया । **न ह्येवंभूतप्रत्ययविषय** इति । क्रियातिपत्तिसंज्ञकप्रत्ययगोचरः ।

335 **यथाश्रुत एव** वार्त्तिकार्थः **कस्मान्न भवतीति** । मीमांसासंज्ञकस्तर्क इत्यादेरनन्तरोक्तस्य वार्त्तिकस्य भीमांसावेदयोरभेद इत्येवंलक्षण एवार्थः कस्मान्न भवतीत्यर्थः ।। **स्वरूपाभिप्रायेणानैकान्तिक** इति । भिन्नस्वरूपा अपि घटा

336 एकस्मात् कुम्भकारलक्षणात् निमित्तात् जायमाना दृश्यन्ते इत्यर्थः । **प्रकाराभिप्रायेणेति** विशेषाभिप्रायेणेत्यर्थः ।।

337 **साधारणैकद्रव्यत्वेऽपीति** । पृथिव्यादेः सर्वजगत्साधारणस्य द्रव्यस्य गुणत्वे ।।

।। इति तर्कविचूर्णिः ।।

56.12 टीयाम् ।। **आपातजन्मप्रत्यक्षज्ञानमपीति** । विचाररहितं यत् झगित्येव
56.13 प्रत्यक्षज्ञानमुदेति तत्तज्ज्ञानमपि सत् न निर्णय इति भावः । **तर्कपूर्वक इति** ।
तर्कसहितप्रमाणपूर्वक इत्यर्थः । तच्च प्रमाणं क्वापि विषये एकं संभवति,
क्वाप्यनेकमतएवाह इति प्रत्यक्षादीनामपि तर्कसहायानां निर्णयफलत्वमिति
व्यक्तम् ।।

338 उने ।। **जात्या किं निर्णयो नास्त्येवेति** । यथा त्रिष्वपि कालेषु घटत्व-
56.4 जातियुक्तो घट एवं निर्णयत्वजातियुक्तः किं कोऽपि निर्णयो नास्ति, येन
वार्त्तिकं कदेत्युक्तमित्यर्थः ।।

।। इति निर्णयावचूर्णिः ।।

57 टीयाम् ।। **प्रत्यधिकरणम् अस्य साधनमिति** ।। अधिकरणमधिकरणं प्रति
अस्य साधनमितीत्येवंरूपं वार्त्तिकमर्थतो गृहीतमनेन टीकाशकलेन ।।

उने ।। अन्यतराधिकरणनिर्णयावसानत्वस्य जल्पाद् भेदकस्य वाद-
240 लक्षणस्य अतिव्याप्तिर्दोष उक्तोऽथाव्याप्तिमाह—**न चेत्यादि** । लक्ष्यव्यापकं
हि लक्षणम् । निर्णयश्च वादस्य कार्यम् । न च कार्यं कारणस्य व्यापकं
भवति, धूमलक्षणकार्यविरहेऽप्यग्नेः सद्भावात् । एवं च सति कोऽपि वादो
निर्णयावसानत्वलक्षणलक्षणविरहितोऽपि भविष्यतीत्यायातम् ।। **तद्योग्यतेति** ।
निर्णययोग्यता । **तमुद्दिश्य प्रवृत्तेरिति** । निर्णयावसानताभिप्रायेणेत्यर्थः ।।

।। इति वादावचूर्णिः ।।

तद्विशेषौ जल्पवितण्डे इत्यत्र तस्य वादसामान्यस्य विशेषौ व्यक्ती जल्प-
वितण्डे इत्येवं षष्ठीसमासे क्रियमाणे दोषद्वयं विशिष्येते भिद्येते इत्यादि
342 टीकावाक्यपातनां कुर्वन्नुज्जीवयत्युदयनो **नन्वित्वादिना** । **परिसंख्यासमभिव्याहार**
इति । षोडशपदार्थमध्ये षोडशसंख्यापूरकत्वेन भणनम् । अयमत्र भावः ।
यथा प्रमाणसामान्यस्य संबन्धिन्यः प्रत्यक्षादिकाश्चतस्रो व्यक्तयः षोडशसंख्या-
पूरकत्वेन न पठ्यन्ते, किंत्वेक एव प्रमाणाख्यः पदार्थः, तत्पूरकत्वेन पठ्यते ।
यथा च प्रमेयसामान्यमेवैकं प[५६४ क]ठ्यते, संख्या पूरकत्वेन, न तु द्वादश
तद्व्यक्तयः । यथा वा संशयादिष्वपि तत्सामान्यमेवैकं प्रस्तुतसंख्यापूर्तयेऽभि-
धीयते, न तु तद्व्यक्तयः । एवं वादसामान्यस्यापि संबन्धः, जल्पवितण्डाख्यं
व्यक्तिद्वयं न प्रक्रान्तपदार्थसंख्यापूरणाय पठितुं युक्तम् ।। **कथं च परस्परविरुद्धयोः**
**सामान्यविशेषभावोऽपीति** । यथा हि प्रमाणसामान्यस्य संशयादिकमप्रमाणं
व्यक्तिर्न भवति परस्परविरुद्धत्वात्, एवं वादस्य वीतरागकथास्वरूपस्य जल्प-
वितण्डे विजिगीषुकथे कथं विशेषौ भवतः, परस्परविरुद्धत्वस्य सद्भावात् ।

59.1 टीयाम् ।। कः पुनर्विशेष इति । तद्विशेषौ जल्पवितण्डे इत्यत्र विशेष्येते भिद्येते इति विशेषाविरयनया व्युत्पत्त्या तद्विशिष्टे इत्ययमर्थो जातः । विशेषयोगाच्च विशिष्टौ भवत इति कृत्वा कः पुनर्विशेष इति प्रश्न उपपन्नः ।।

342 उने ।। उद्देश्यश्चासौ विशेषश्चोद्देश्यविशेषः । तेन सहाभिसंबन्ध उद्देश्यविशेषाभिसम्बन्धः । स पूर्वं वादव्याख्यानावसरे वादात् जल्पवितण्डयो र्यो भेदस्य हेतुरुक्तः ।। तथा हि तत्त्वनिर्णयमुद्दिश्य तयोः साधनदूषणप्रयोगसन्दर्भो वादः । स्वशक्तिपराशक्तिख्यापनमात्रमुद्देश्यं जल्पवितण्डयोरिति ह्यनन्तरमेवोक्तम् ।।

ननु किमित्युद्देश्यविशेषाभिसंबन्धलक्षणभेदहेत्वपेक्षया अयमपरो भेदहेतुरुच्यते, यावता अनन्तरनिरूपितं यदङ्गाधिक्यमङ्गहानिश्चेति तदपेक्षया किमित्यपरत्वं नोच्यते भेदहेतोः । अत्रोच्यते । अङ्गाधिक्याङ्गहानी भेदो न तु भेदस्य हेतुः । अतः कथं भेदापेक्षया भेदहेतोरपरत्वं युज्यते । तस्मात् पूर्वं यो भेदहेतुरुद्देश्यविशेषाभिसंबन्ध उक्तः, तदपेक्षयैवापरत्वं विषयभेदलक्षणस्य भेदहेतोः समीचीनम् ।।

।। इति जल्पवितण्डावचूर्णिः ।।

59.8 टीयाम् ।। पञ्चसु चतुर्षु वेति । अन्वयव्यतिरेकिणि हेतौ पक्षधर्मत्वादीनि पञ्च रूपाणि । केवलव्यतिरेकिणि केवलान्वयिनि च यथाक्रमं सपक्षसत्त्व-
60.4 विपक्षव्यावृत्त्योरभावाच्चत्वारि । अतस्तेषु पञ्चसु चतुर्षु वा लिङ्गरूपेषु मध्ये ।। नाविनाभावलक्षणः संबन्ध इत्यर्थ इति । असंबन्धादित्यत्र वार्त्तिकशकलेऽविनाभावाभावलक्षणोऽसंबन्धोऽभिप्रेतः । स चानेकप्रकारोऽप्यत्रानैकान्तिकत्वलक्षणहेतुदोषसमुत्थो ग्राह्य इति भावः ।

60.4 वाके । न तावन्निग्रहस्थानेभ्यो न्यूनाधिकयोः पृथगुपदेश इति । यथा हेत्वाभासा निग्रहस्थानेभ्यः पृथगुक्ता नैवं न्यूनाधिके इत्यर्थः ।।

60.7 टीयाम् ।। पृथगुपदेशादिति च द्रष्टव्यमिति । हेत्वाभासा वादे चोदनीयाः पृथगुपदेशादिति द्रष्टव्यमित्यर्थः ।।

344 उने ।। यद्यपीत्यादेर्दर्शित इत्येतदन्तस्य व्याख्या । ननु च हेत्वाभासा निग्रहस्थानेभ्यः पृथगभिधेया वादे नोदनीयत्वात् । हेत्वाभासा वादे नोदनीया निग्रहस्थानेभ्यः पृथगभिहितत्वादित्येतस्यैकदेशिविवक्षितस्य हेतुद्वयस्य योऽयं वार्त्तिककृता अनैकान्तिकत्वेनाविनाभावाभावो दर्शितः [५९४ ख] स किमर्थम् ? यावता व्यभिचारस्यानैकान्तिकतालक्षणस्यादर्शनेऽप्यनवलोकनेऽप्यविनाभावो न सिध्यति हेतुद्वयेऽपि । सोपाधित्वेनाप्रयोजकत्ववशादप्यनयोर्हेत्वोरगमकत्वात् । तथा हि, प्रथमहेतौ तावद् यत् साध्यं पृथगभिधानं तत्पुरुषेच्छोपाधिकम् ।

पुरुषो हि यथेच्छति तथा वक्ति। न तु वादे नोदनीयत्वेन सहाविनाभावि पृथगभिधानम्। द्वितीयस्मिन्नपि हेतौ यद्वादे नोदनीयत्वं साध्यं तत् किलानुद्भावने सति हेत्वाभासानां यत् तत्त्वप्रतिपत्तिव्याघातहेतुत्वं तदुपाधिकम्। न तु पृथगभिधानाविनाभावि ॥

सत्यम्। व्यभिचारस्यैव स्फुटत्वात् स एव दर्शितः। अनैकान्तिकत्वं मन्दमतेरपि परिस्फुरतीति स्फुटमिति तदेव दर्शितम्। अप्रयोजकत्वं त्वतिनिपुणधिषणानिरूपणीयमिति न स्फुटमिति नोक्तम् ॥

**पृथगभिधानप्रयोजनमात्रमिति** ॥ पृथगभिधानस्य प्रयोजनमात्रं यद् भाष्या-
344 क्षरेभ्यः साक्षात् प्रतीयते, तच्चैतदेव यद् वादे नोदनीयत्वं नाम। **हेतुत्वं पुनरविवक्षितमेवेति।** पृथगभिधेया वादे नोदनीयत्वात्। वादे नोदनीयाः पृथगभिहितत्वादित्येवं हेतुत्वं न विवक्षितमित्यर्थः। तर्हि केन तदारोपित-
345 मित्याह—तार्किकम्मन्येनेत्यादि। सुव्यक्तम्। **नन्वेवंरूपप्रयोजनलाभोऽपि कथमिति।** वादे नोदनीया इत्येवंरूपस्यापि प्रयोजनस्य कथं लाभ इत्यर्थः।

345 **अत्रेति।** वादे नोदनीया इत्येवं रूपे प्रयोजने ॥

टीयाम् ॥ **सूत्रणमिति।** सूचनम्।

345 उने ॥ **अग्रे** इति। प्रमाणसामान्यात् पृथगुपदेश इत्यादिके वार्त्तिके।

345 **तत् कुतो न विरोध** इति। विद्याशब्देन हि आन्वीक्षिक्यादय एवाभिधीयन्ते, न तु वादादय इत्याभिप्रायः संशयानस्य शिष्यस्येत्यर्थः ॥

टीयाम् ॥ **अतएव जल्पवितण्डयोस्त्वित्याहेति।** जल्पवितण्डयोश्च निग्रहस्थानानीत्येवं रूपं भाष्यम्। वार्त्तिककारोऽग्रे भणिष्यतीति भावः ॥

345 उने। **अस्येति।** वार्त्तिककारस्य।

347 **लक्षणेनेति।** सजातीयविजातीयव्यवर्तकेन धर्मेण। **व्यवस्थाप्यत** इति। नियम्यते। **व्यवस्थितं ज्ञाप्यते** इति। नियतं सल्लक्षणेन बोध्यते। **लक्ष्यत इति लक्षणमितीति।** व्यावृत्तं वस्तुस्वरूपमेवात्र लक्षणशब्देनाभिहितम्, न तु व्यवर्तको धर्म इति भावः ॥

टीयाम् ॥ **व्यवस्थेति।** नैयत्यम्। तदेवाह—**कानिचिदेव निग्रहस्थानानि वादे, न सर्वाणीति।** व्यक्तम्। **निश्चितौ** हीति। स्वकल्पनया हि द्वावपि तौ निश्चितमती इत्यर्थः। **पांसनमिति।** पांसुभिरवकिरणं पांसनम्। पांसनमिव पांसनं खलीकार इत्यर्थः ॥

उने ॥ **तत्रेति।** वादे। **अन्यथापीति।** पृथगभिधानाभावेऽपि। **तेषामिति।** न्यूनादीनाम्। **तदिति।** वादे नोदनीयत्वम्। **तत्त्वप्रतिपत्तिव्याघा-**

**तकत्वमिति** । हेत्वाभासानुद्भावनं कर्तृ । तत्त्वप्रतिपत्तिव्याघातकत्वं कर्मतापन्नं जह्यादिति योग: ।।

वार्त्तिके ।। **प्रमाणसामान्यादेवेति** । अत्र पञ्चावयवं वाक्यं प्रमाणम् । तेन च सह किञ्चित् साम्यमधिकस्य हीनस्य च वाक्यस्यास्त्येव ।।

।। इति हेत्वा[५९५ क]भाषावचूर्णि: ।।

**स्वयं चेत्यादेरनेन भाष्येणेत्येतदन्तस्यायमर्थ:** ।। स्वयं च सुकर: प्रयोग इत्येवं रूपो भाष्ये ग्रन्थ: प्रत्यक्षेणैव प्रतीयते । अतो **वार्त्तिककार:** स्वयं च सुकर: प्रयोग इति किमुक्तं भवतीत्यनेनोल्लेखेन यदस्य ग्रन्थस्य स्वरूपं प्रश्नयति तदसङ्गतमिति कृत्वा टीकाकार: पूरयति इत्यनेन भाष्येणेति वदन् सन् । अयमत्र भाव: । स्वयं च सुकर: प्रयोग इति किमुक्तं भवतीत्येतावानेव न वार्त्तिकग्रन्थ:, किं तु स्वयं च सुकर: प्रयोग इत्यनेन भाष्येण **किमुक्तं भवतीत्येतावत्** । ततश्च नायं ग्रन्थस्वरूपस्य प्रश्नोऽपि तु ग्रन्थभावार्थस्येति न दोष: ।

250 **प्रयोजनान्तराभिधानमिति** । प्रदीप: सर्वविद्यानामित्यादि श्लोकेन । **तदनुगुणमेवेति** । आत्यन्तिकदु:खोपरमरूपे नि:श्रेयसाधिगमलक्षणं यत् सूत्रकृदभिहितं प्रयोजनं तस्यानुकूलमेव । **तन्मूलतायामिति** । आन्वीक्षिकीव्युत्पाद्यप्रमाणमूलतायाम् । **तदितरव्यवहारस्याप्युच्छेदप्रसङ्गादिति** । प्रमाणाभावे प्रमेयव्यवहारोच्छेद: प्रसज्यते इत्यर्थ: । **ततश्चेतरविद्यास्वपि** प्रमाणव्यवहार: कश्चित्स्वीकर्तव्य: । **तत्रेति** । इतरासु विद्यासु । **तद्व्युत्पत्तिस्त्वित एवेति** । प्रमाणव्युत्पत्तिरान्वीक्षिकीशास्त्रादेवेत्यर्थ: । **न तु तत इति** । न तु विद्यान्तरेभ्य: ।।

351 **प्रणेतृश्रोतृप्रमाणोपजीवनमिति** । प्रणेतृश्रोत्रो: संबन्धिनी ये प्रमाणे तयोरुपजीवनम् । तथा हि । आन्वीक्षिक्या: प्रणेता केनापि प्रमाणेन प्रमाणादिस्वरूपं विज्ञाय प्रतिपादयति । श्रोतापि केनचित् प्रमाणेनान्वीक्षिक्यभिधेयप्रमाणादि परिज्ञाय तच्छ्रवणे प्रवर्तते । **एतद्व्युत्पाद्यमिति** । एतया अ[ा]न्वीक्षिक्या व्युत्पाद्यं प्रमाणादि तद्व्युत्पाद्यमिति । ताभिरितरविद्याभिर्व्युत्पाद्यम् ।

352 **इयमिति** । आन्वीक्षिकी । **परस्परोपजीव्योपजीवकभावाभाव** इति । आन्वीक्षिक्यपि प्रणेतृश्रोतृप्रमाणे उपजीवति । तदितरविद्या अप्यान्वीक्षिकीव्युत्पद्यं प्रमाणादिकमपेक्षन्ते । ततश्चान्योपजीवित्वे समानेऽपि यथेतराभिरान्वीक्षिकी अपेक्ष्यते, तथा तयापि ता: किमिति नापेक्ष्यन्त इति भाव: । **अपेक्ष्यत** इति प्रत्यक्षादि कर्तृ । **तदैवेति** । यदा स्वविषयं गृह्णाति । **प्रागेवेति** । पश्चात् स्वप्रमाणव्यवस्थितिकाले इत्यर्थ: । **व्युत्पाद्यस्वजातीयापेक्षानिवारणायेति** । व्युत्पाद्यं च तत् स्वजातीयं च प्रमाणजातीयं लक्षणम् । तदपेक्षानिवारणाय ।

तथा हि धूमादग्न्यनुमानं महानसादौ धूमाग्निग्राहकप्रत्यक्षस्य व्युत्पाद्यं सजातीयं चोभयोरपि प्रमाणत्वानपायात् । न च तेन प्रत्यक्षं विषयी क्रियते । एवमितरा विद्या आन्वीक्षिकीव्युत्पाद्यमेव प्रमाणाद्युपजीव्य स्वव्युत्पाद्ये तत्त्वे प्रवर्तन्ते, न तु प्रमाणाद्यपि व्युत्पादयन्तीति उपजीव्यस्य साम्येऽपि परस्परोपजीव्यजीवकत्वाभावः सिद्धः । अतो न विरोध इति ।

353 अतो न विरोध इति । प्रदीपः सर्वविद्यानामिति भाष्येणान्वीक्षिक्या न्यायशास्त्रनामधे[५९५ ख]याया: प्रकाशकत्वं वर्णितम् । वार्त्तिककारेण तु प्रमाणादिप्रकाशितमर्थमितरा विद्याः प्रतिपद्यन्त इति वदता आन्वीक्षिक्यभिधेयानां प्रमाणादीनां प्रकाशकत्वं प्रतिपादितमित्येवं सति विरोधाशङ्का स्यात् । सा न विधेया, यतो भाष्ये आन्वीक्षिकीविद्याया यत् प्रकाशकत्वमुक्तं तस्यैव निर्वाहाय वार्त्तिके प्रमाणादिग्रहणम् । यदा हि आन्वीक्षिक्यभिधेयाः प्रमाणादयः प्रकाशकाः, तदभिधायिका आन्वीक्षिकी नितरां प्रकाशिका, अभिधानाभिधेयसन्दर्भरूपत्वादान्वीक्षिक्याः ।

वाके ।। न सन्तीत्याहेति । प्रदीपः सर्वविद्यानामित्यनेन भाष्येणेदमाह—भाष्यकार इत्यर्थः ।

353 उने ।। तदेवं स्वस्वरूपेणेत्यादेरुपाय इत्येतदन्तस्यायमर्थः । प्रदीपः सर्वविद्यानामित्यनेन श्लोकपादेनेदं दर्शितं यदुतेतरविद्याः स्वस्वरूपव्यवस्थापने आन्वीक्षिकीमपेक्षन्ते । उपायः सर्वकर्मणामित्यनेन तु यः कर्मलक्षणोऽपि विषय
354 इतरविद्यानामभिधेयः, तत्राप्यान्वीक्षिकीमपेक्षन्ते ता इति दर्शितम् । आन्वीक्षिकीलक्ष्य इति । आन्वीक्षिकीलक्षणं यत् शास्त्रं शाब्दप्रमाणस्वरूपं तद् विद्यात्रयेऽपि तर्कमुपढौकयितुं पटीय इत्यर्थः । उपसंहारे इति । तस्मात् संशयपरीक्षेपादौ विवक्षिता इति परीक्षाशब्देन । अर्थवादादेवेति । आदित्यो वै यूप इत्यादि । तत्रेति । अर्थतत्त्वे । व्यापारगतामिति । स्वस्वरूपे विषये चेतरविद्या आन्वीक्षिकीसापेक्षा इति यथाक्रमं श्लोकपादद्वयेन दर्शितं भाष्यकृता ।

आश्रयः सर्वधर्माणामित्यनेन तु तृतीयपादेनेति दर्शयति यदुत स्वविषयेऽपीतरविद्याः पुरुषं प्रवर्तयमाना आन्वीक्षिकीसापेक्षा इति भावः । किं च भाष्यकारस्य हि धर्माणां स्वस्वविषये पुरुषप्रवर्तनालक्षणानामितरविद्यासंबन्धिनां साक्षादान्वीक्षिकी समाश्रय इति संमतम् । वार्त्तिककारस्य तु धर्मद्वारेणेतरविद्यानामेवाश्रय आन्वीक्षिकीत्यभिप्रायः । विधिपदसमभिव्याहारस्तत्पदस्येति । तस्य स्वर्गादेः साध्यस्य प्रतिपादकं पदं तत्पदं तस्य तत्पदस्य विधिपदेन जुहुयादित्यादिना समभिव्याहारः सहपाठ एकवाक्यतया

अग्निहोत्रं जुहुयात् स्वर्गकामः

इत्युल्लेखरूपया यद्ग्रहणमित्यर्थः । तच्छङ्काकारणम् । तथा हि एकस्मिन्नेव

वाक्ये स्वर्गकामनाविशिष्टोऽधिकारी । स्वर्गरूपं साध्यमग्निहोत्रं च स्वर्गसाधनं पठितम् । परमेकवाक्यतया पाठे समेऽप्यधिकारी न विधेर्विषयः । अग्निहोत्रं तु तद्विषयः । अतः समानधर्मोपलब्धेरुत्पद्यते शङ्का । किमग्निहोत्रवद्विधिविषयः स्वर्गादिः साध्यः पदार्थः, आहो अधिकारिवन्न तस्य विषयः । विधिपदेन सहैक-वाक्यतया पाठस्य तुल्यत्वादिति । इयमेव शङ्का **विधिपदसमभिव्याहृते**त्यादिना नेत्येतदन्तेन भाविता । **तत्रे**ति । साध्यस्य विधिविषयत्वे ।

357 **स्वज्ञानेनेच्छामन्तरा कृता प्रयत्नोत्पादक इतीति** । जुहुयादित्यादिर्हि [५९६ क] विधिर्ज्ञायमानः सन् यागविषयामिच्छामुत्पादयति । तदनन्तरं पुरुषस्य प्रयत्नं जनयति सचेतनप्रवर्तनलक्षणत्वाद् विधेः । **साध्यविषय** इति । साध्यः स्वर्गादि-विषयो यस्य प्रयत्नस्य स तथा । **उपाय** इति । यागादिरूपं स्वर्गादेः साधनम् ।

358 **तदविषयत्वादिति** । प्रयत्नस्यागोचरत्वात् । **सिद्धान्ते** इत्यादेरपनयतीत्यन्तायाः पातनाया व्याख्या । ननु यदि साध्यांशो न विधिविषयस्तर्हि साध्यपदस्य विधिपदेन सहैकवाक्यतया पाठः क्वोपयुज्यते इत्येवंरूपां शङ्कामपनयति । किं कुर्वन् सिद्धान्ते श्येनादिसाध्या हिंसा अनर्थ इत्येवंरूपे स्वपक्षे प्रमाणमविहितत्वे-नेत्येवंरूपमावेशयन्नियोजयन्नेव ।। **इष्टमिति** । स्वर्गादिकम् । **इष्टस्यानुवादो-ऽयमिति** । सुखविशेषस्वभावः स्वर्गः प्राणिनां रागत एव प्राप्त इति कृत्वा सिद्ध एवासौ । अतः स्वर्गादिपदेनानुवाद एव तस्य, न तु विधिः । ततश्च साध्यपदसमभिव्याहारस्यानुवादमात्रं प्रयोजनमिति सिद्धम् ।।

टीयाम् ।। **अनुष्ठानगता** इति कर्माश्रिताः ।।

360 उने ।। **आमिक्षायाः प्रयोजकत्वमिति** । तप्तस्य पयस उपरि दधिक्षेपे सति यद् वराटिकाकारं द्रव्यमुत्पद्यते सा आमिक्षा । तस्या एवाधस्ताद् यज्जलं भवति तद्वाजिनमित्युच्यते । अनयोर्मध्यात् क्षीरहोमे आमिक्षैव प्रयोजिका क्षीरहोमस्थाने रसादिसाम्येन तस्या विनिवेशात् । न तु वाजिनम्, तस्यावर्ज-नीयमात्रोत्पत्तिकत्वात् । आमिक्षा हि जायमाना तद्वर्जयितुं न शक्नोति । तस्यां जायमानायां तस्यावश्यंभावात् । अतो वर्जनीयतामात्रेणैव तत् तया सह संबद्धमिति न प्रयोजकम् । **तद्धर्मानिति** । विद्यानां प्रवर्तनालक्षणान् धर्मान् ।।

टीयाम् ।। **स चेति** । व्युत्पाद्यस्वभावः । **असाधारणात्मादिरूपप्रमेय-समभिव्याहृतमिति** । आत्मादिकं हि द्वादशविधं प्रमेयमितरविद्यापरिच्छेद्यं न भवतीत्यसाधारणम् । तेन च सह पठिता अमी प्रमाणादयः ।।

361 उने ।। **आयतन्ते** आयत्तानि भवन्ति । **उष्मसिद्धिरिति** । प्रताप-प्रतापप्रभावः ।।

भाष्ये ।। **उद्देशे परीक्षिता** । उद्देशनाम्नि नीतिशास्त्रप्रकरणविशेषे ।।

वाके ।। प्रमाणादिपदार्थतत्त्वज्ञानान्निःश्रेयसमिति । विद्यान्तरसाधारणं निःश्रेयसमित्यर्थः ।।

।। इति प्रथमसूत्रावचूर्णिः ।।

364 उने ।। प्रयोजनसम्बन्धस्येति । प्रयोजनेन निःश्रेयसलक्षणेन सह सम्बन्धः प्रमाणादीनां तत्त्वतो ज्ञायमानानाम् । उद्देशपरमेवेति । न तु प्रयोजनसम्बन्धप्रतिपादनपरमित्यभिप्राय आशङ्काकारस्य । तस्मादिति । प्रथमसूत्रात् । स चापेक्षितत्वाद् गृहीत इति । उद्देशो हि शिष्यैरपेक्षितः । प्रतीयते च प्रथमसूत्रात् इत्यसावपि प्रथमसूत्रस्याभिधेयतया व्याख्यातृभिर्व्यवस्थाप्यते । परमार्थतस्त्वभिधेयप्रयोजनसम्बन्धा एव प्रथमसूत्राभिधेया इति भावः ।

365 एतेन परीक्षाविषयो दर्शित इति । एतेन तदेवमित्यादिना उद्दिष्टा इत्येतदन्तेन टीकाग्रन्थेन परीक्षाया द्वितीयसूत्रगताया विषयः प्रयोजनसम्बन्धलक्षणो दर्शितः । ततश्च यदुक्तं शङ्काकारेणाप्रतीत[ ५९६ ख ]स्वरूपस्येत्यादि तदयुक्तम्, प्रथमसूत्रात् प्रयोजनसम्बन्धस्वरूपस्य प्रतीतिसद्भावात् । उचितं दर्शयन्नेवेति । उद्देशानन्तरं हि प्रमाणादीनां लक्षणपरीक्षे अभिधीयेते इत्येवमुचितं तेषां चेत्यादिना निर्णयायोगादित्येतदन्तेन टीकाशकलेन दर्शयन् । तदतिक्रमे इति । उचितलङ्घने । हेतुमिति । न चानिर्णीतेत्यादिकं कारणम् ।।

टीयाम् ।। अनिर्णीतप्रयोजनसम्बन्धानामिति । न निर्णीतः प्रयोजनेन निःश्रेयसलक्षणेन सह सम्बन्धो येषां प्रमाणादीनां तत्त्वतो ज्ञायमानानां ते तथा, तेषाम् ।।

उने ।। एतेन छलत इत्यादेरयमाशयः । न चानिर्णीतेत्यादिना परीक्षां विनेत्येतदन्तेन टीकाग्रन्थेन मुख्यवृत्त्या उचितातिक्रमे हेतुरुक्तः । व्याजतस्तु प्रयोजनसंबन्धपरीक्षायाः फलमपि प्रयोजनसंबन्धनिर्णयाख्यमुपदर्शितम् । उभय-

265 कोटिसंस्पर्श इति । समीचीनत्वासमीचीनत्वलक्षणोभयपक्षसंबन्धः ।।

टीयाम् ।। वार्तिकादिप्रयोजनाभिधानमिति । मन्त्रवादशास्त्रं वार्तिकम् ।

366 उने ।। निर्णायकरहितादिति । विपक्षाद्यावरका ये धर्मा तद्रहितात् । तत्सहचरितोभयकोटिदर्शनजसंस्कारभुव इति । तेनाभिधानसाम्येन सहचरिते ये उभयकोटी समीचीनत्वासमीचीनत्वलक्षणे तयोदर्शनं तस्मात् जातो यः संस्कारः, तस्माद् यद् भवति स्मरणं तत् तथा तस्मात् । आप्तत्वावधारणात् प्रागिति । यदा हि सूत्रकारस्यापूर्वं कुतोऽपि प्रमाणादवगतं तदा संशयो नोत्पद्यत एव । आप्तप्रणीतत्वेन प्रयोजनाभिधानस्य समीचीनत्वनिर्णयात् ।।

अत्रेति । अत्र प्रयोजनाभिधानस्येत्यादौ उभयथा दर्शनाच्च संशय इत्येतदन्ते टीकावाक्ये ।। वचन एवेति । प्रयोजनाभिधानलक्षणे वचसि । न तु

367 प्रयोजनलक्षणेऽभिधेये । **तद्द्वारेति** । अभिधानद्वारेण । **अर्थे एवेति** । प्रयोजनलक्षणेऽभिधेये । **तदेवेति** । प्रयोजनम् । **प्रतिज्ञासंशयपरीक्षाणां वैयधिकरण्यमिति** । इति तत्परीक्षार्थं द्वितीयसूत्रमिति हि वदता टीकाकृता प्रयोजनसंबन्धः परीक्षणीयतया प्रतिज्ञातः । तदनु तत्र **प्रयोजनाभिधानस्येत्या**दिना ग्रन्थेन टीकाकृतैव प्रयोजनाभिधाने संशयो दर्शितः, न तु संबन्धे । **तत् खलु वै निःश्रेयसमि**त्यादिना तु ग्रन्थेन भाष्यकृता एतद्व्याख्यानं कुर्वता वार्त्तिककारेण टीकाकारेण च निःश्रेयसलक्षणे प्रयोजने एव परीक्षा दर्शिता इति प्रतिज्ञाप्रयोजनसंबन्धविषया । संशयः प्रयोजनाभिधानगोचरः, परीक्षा तु प्रयोजनविषया इति त्रयाणामपि वैयधिकरण्यं किल । एतच्च परमार्थतो नास्ति यतः संशयो यद्यप्यभिधाने दर्शितः, तथाप्यभिधानद्वारा प्रयोजनलक्षणेऽर्थे एव द्रष्टव्यः । ततश्च प्रयोजने संबन्धिनि संशयानन्तरं परीक्षा विधीयमाना परमार्थतः संबन्धे एव कृता भवति । अतः प्रतिज्ञात एवार्थे संशयः परीक्षा च

367 वृत्तेति । **सूत्रे व्याख्यातव्ये उत्सूत्रेणेति** । **उत्सूत्रेणेति** यत् टीकायां वचस्तस्यायं भावार्थः । सूत्रे व्याख्यातव्ये सति ।

वाके ।। **उभयथा दोषादिति** । तत्त्वज्ञानानन्तरं निःश्रेयसस्य भावेऽभावे च दोषसद्भावादित्यर्थः ।।

367 उने ।। **नोद्यमनवकाशमिति** । जीवन्मुक्तिलक्षणमपि निःश्रेयसं यदा स्वीक्रियते, तदा अवस्थानमुपपन्नमिति पातनार्थः ।

टीयाम् ।। **तदत्यन्तविमोक्षलक्षणोऽपवर्गो निःश्रेयसमिति** । दुःखात्यन्तापगमलक्षणमेव निःश्रेयसं मन्यते परो न तु जीवन्मुक्तिलक्षणमपीति भावः ।।

269 उने ।। **स्फुटं** वार्त्तिक**मिति** टीका**र्थः** इति । न तत्त्वज्ञानादपवर्ग इत्यादिकं **तत्त्वदृक्पूर्वकमितीति** पर्यन्तं वार्त्तिकं स्फुटत्वान्न प्रतिपदं टीकाकृता व्याख्यातमित्यर्थः । **सिद्धान्तवार्त्तिकस्येति** । **न निःश्रेयसस्य परापरभेदादित्यादेः** ।।

टीयाम् ।। **तस्य तात्पर्यमभिधायावतारयतीति** । यत् सिद्धान्तसूत्रं दुःखजन्मेत्यादिकमुपतिष्ठते, तस्य सूत्रस्य न निःश्रेयसस्य परापरमित्यादिना वार्त्तिकेन तात्पर्यमभिधाय वार्त्तिककारो दुःखजन्मेत्यादिकमेव सूत्रमवतारयति ।।

269 उने ।। वार्त्तिक**मिति** । निःश्रेयसस्य परापरभेदादित्यादिकम् । **न पूर्वपक्षाच्छादकमिति** । यदि नाम निःश्रेयसं द्विभेदं तथापि पूर्वपक्षस्तदवस्थ एव । न हि जीवन्मुक्तिलक्षणमपरमपि निःश्रेयसं प्रमाणादिपदार्थतत्त्वज्ञानादनन्तरमेव भवतीति भावः ।। एतदेवाह—**न ह्यपरमित्या**दिना । **शास्त्रीयात् तत्त्वज्ञानादिति** । शास्त्रसमुत्थात् प्रमाणादितत्त्वज्ञानात् । **यस्माच्चेति** । आत्मादिसाक्षात्काररूपाज्ज्ञानात् पुनः । **न तच्छास्त्रीयमिति** । ध्यानजं हि साक्षात्काररूपं ज्ञानं न तु शास्त्रोत्थम् ।।

टीयाम् ।। **परीक्ष्येति** । वितर्कं कृत्वा । **न्यायेनेति** । पञ्चावयवेन वाक्येन । **सा चेति** । मननलक्षणा द्वितीया प्रतिपत्तिः पुनः ।।

370 उने ।। **प्रवृत्त्यन्तरोपासनमिति** । ध्यानरूपायाः प्रवृत्तेरभ्यास इत्यर्थः । **न हि निश्चयो निश्चयत्वेन मोक्षे उपयुज्यत** इति । आत्मादिविषयो निश्चयो जात इत्येतावतैव न मोक्ष इत्यर्थः । **अपरोक्षविषयो मोह** इति । प्रत्यक्षात्मादिविषयं मिथ्याज्ञानम् । **तदुपायानुष्ठानेनेति** । तस्य मोहनिराकरणकारकस्य

371 साक्षात्काररूपस्य ज्ञानस्य य उपायो ध्यानलक्षणस्तदनुष्ठानं निष्पादनं तेन । **तयोरिति** । औपदेशिकानुमानिकनिश्चययोः ।

**वाक्यार्थज्ञानादेवेति** । श्रवणमननस्वरूपात् । **तयोरिति** । कार्यकारणयोः । **यथासंवृत्तिव्यवस्थमिति** । संवृतिव्यवस्थाया अनतिक्रमेण । कोऽभिप्रायः ? संवृतिसत्त्वेऽपि कार्यकारणभावस्यैवं व्यवस्थास्ति । यदुत परलोकार्थिना सन्ध्योपासनादि विधेयम्, न तु पुरन्ध्रिपरिरम्भादीति ।। **भौतदर्शकनदीतरणमुदाहृतमिति** । किल काञ्चित् नदीं दश परमाचार्याः [ उत्तीर्णाः ? ] सन्तः परस्परं पृच्छन्ति किं वयं दशापि समुल्लङ्घितवन्तः श्रवन्ती [म्] ? तेषां **चैकैकस्तान्** गणयन् आत्मानं न गणयांबभूव । ततो नवसंख्यानेवासौ तानवधारयन्नन्यस्य कस्यचिद् वाक्यादात्मानं साक्षात्कृतवान् । एवं च यथा तैर्भौतैरात्मा अन्यवाक्यात् साक्षात्कृतः, तथा श्रुतिवाक्येभ्योऽस्माभिरात्मा साक्षा [५६७ख]त्करणीय

372 इति न श्रुतेरपि वैफल्यम् । **किं तु चक्षुरादिनैवेति** । वाक्यश्रवणसमनन्तरं हि चक्षुरादि व्यापारयन्नेव भौत आत्मानं साक्षात्करोति, न तु वाक्यादेव । **मनसा सहकृतेनैव भविष्यतीति चेदिति** । मनः सहकारि प्राप्य श्रुतिवाक्यमेवात्मसाक्षात्कारं जनयिष्यतीति भावः । **भौतानामिव स्वशरीरे चाक्षुषस्येति** । यथा भौतानां स्वशरीरे चाक्षुषोऽभ्यासो दृढतरः समस्ति तथा मुमुक्षोः श्रुतश्रुतेरपि मानसो दृढतरोऽभ्यासः स्वात्मनि नास्ति । **तदर्थमिति** । आत्मसाक्षात्कारार्थम् ।।

373 **स एवेति** । अभ्यास एव । **तदनादरे त्विति** । अभ्यासानादरे पुनः । **पुरुषार्थोऽपीति** । निःश्रेयसलक्षणः । **तुल्ययोगक्षेमत्वादिति** । पुरुषार्थादरणे हि तदर्थमभ्यास आयात्येवेति तुल्ययोगक्षेमत्वम् ।

**उभयनोद्यपरिहारार्थमिति** । यदि तावत् तत्त्वज्ञानानन्तरमपवर्ग इत्यादिकमेकं द्वितीयं तु अथोत्पन्नतत्त्वज्ञानोऽवतिष्ठत इत्यादिकं नोद्यं यद् वार्त्तिके तस्य परिहारार्थम् ।

374 **पूर्वः पूर्वो हेतुरुत्तरोत्तरस्तद्वानिति** । परिनिष्पन्नमानोपायत्वात् साक्षात्कारवान् । साक्षात्कारवत्त्वाच्च निर्मुक्तक्लेशजालः । क्लेशरहितत्वाच्च धर्माधर्मसाधनेषु न प्रवर्तते । अप्रवृत्तेश्चानागतधर्माधर्मप्रबन्धोत्पादविरहितः धर्माधर्मो-

त्पादविरहितत्वाच्च भूतेन्द्रियजयी । य[त] एवंभूतोऽतएव प्रज्ञाज्योतिः । यत एव प्रज्ञाज्योतिरतएव जीवन्नेव मुक्त इत्युच्यते । इत्येवं पूर्वपूर्वो हेतुरुत्तर उत्तरस्तद्वानिति सिद्धम् ।

**चोद्यसंभावनाय दृष्टान्त** इति । प्रायश्चित्तेनेवेति योऽयं दृष्टान्तः स नोद्यस्य संभावनार्थम् । घटमानमेवेदं नोद्यसंभावनार्थमित्यर्थः । तामेव नोद्य-संभावनां **न तावदित्यादिना करिष्यतीत्यर्थ** इत्यन्तेन भावयति । **अधिकारापत्तिः फलमिति** । कृतप्रायश्चित्तः क्वापि कर्मण्यधिक्रियते इति केचिद् वर्णयन्ति । एतच्च न युक्तम् । कुत इत्याह—आगममन्तरेणादृष्टकर्मणां फलविशेषकल्प-नायां प्रमाणाभावात् । अदृष्टमनुपलब्धं प्रस्तावात् फलं येषां कर्मणामिह तावत् प्रायश्चित्तरूपाणां तान्यदृष्टकर्माणि । तेषां फलविशेषकल्पनायामधिकारा-पत्तिलक्षणफलकल्पनायामागमं विमुच्यान्यस्य प्रमाणस्याभावात् । आगमश्चा-
375 धिकारापत्तिलक्षणफलप्रतिपादको नास्तीति भावः । **श्रूयमाणफलपरित्याग-प्रसङ्गाच्चेति** । यदि ह्यागममन्तरेणापि फलं कल्प्येत तर्हि येषु कर्मसु अग्नि-होत्रादिषु फलं श्रूयते तेष्वपि श्रूयमाणं परित्यज्येत । **नेदमिति** । श्रूयमाणस्य फलस्य त्यागोऽश्रूयमाणस्य च कल्पनेत्येवं रूपं नैवानिष्टमस्माकम्, आगमस्य बलवति बाधके सति ।। **अनन्यथासिद्धस्येति** । अनुपचरितार्थस्य । **अतएवेति** । बाधकसहस्रेणाप्यनन्यथासिद्धस्यागमस्यापनेतुमशक्यत्वाद्धेतोः । **प्रायश्चित्ताचरणं दुःखमेवेति** । प्रायश्चित्ते चर्यमाणे य आयासः स एव किल ब्रह्महत्यादीनां फलम्, न तु नरकादिदुःखदायकस्य कर्मणो बन्ध इति यत् केचिद् वदन्ति तन्नेत्यर्थः । अविशे [ ५९८क & ख wanting ] [ ५९९ क ] **तत्सामर्थ्य-मिति** । एतत्सामर्थ्यं योगविभागस्य नास्ति यतः सामर्थ्यात् कार्यकारणभाव-मभिधत्ते इत्यर्थः ।।

70 टीयाम् ।। **एकवाक्यत्वावरोधायेति** । एकवाक्यतया सूत्रस्य ग्रहणाय । **परमतात्पर्यमिति** । अवान्तरतात्पर्यं हि क्रमप्रतिपादनं किल । तदपेक्षया पर-मेत्युक्तम् । **अस्येति** । द्वितीयसूत्रस्य ।।

69 वाके ।। **एतत्संबन्धेनैवार्थेनार्थवदिति** । एतद्द्वितीयसूत्रमर्थवत् प्रयोजन-वत् । केन प्रयोजनवदित्याह—अर्थेन प्रयोजनेन । किं नाम्नेत्याह—संबन्धेनैव । शास्त्रस्य निःश्रेयसाधिगमलक्षणेन प्रयोजनेन यः संबन्धः पूर्वमाक्षिप्तस्तस्मात् समाधानलक्षणेनैव । एवं च संबन्धेनैवेति कोऽर्थः ? संबन्धसमाधानेनैवेत्यर्थः ।। एतदनुसारेण च टीकाव्याख्यानवाक्याक्षरयोजना कार्या ।।

ननु संबन्धेनैवेत्युक्ते कथं संबन्धसमाधानं लभ्यते इत्याशङ्क्याह टीकाकारः—

70 **संबन्धपदेन विषयवाचिना विषयिसमाधानं लक्षयतीति** । संबन्धो हि संबन्धा-क्षेपसमाधानस्य विषयः । ततश्च यदि विषयेण संबन्धेन विषयि यत्समाधानं तल्लक्ष्यते, किमयुक्तं नाम ?

388 उने ।। तत् कथमाह—**तत्रात्मादावितीति** । सूत्रे हि मिथ्याज्ञानमात्रमेव श्रूयते । अतः कथं वार्त्तिककारस्तत्रात्माद्यपवर्गपर्यन्तं प्रमेयं ज्ञेयं तस्मिन् मिथ्याज्ञानमनेकप्रकारं वर्तत इति सविशेषे ब्रूते इति भावः ।।

टीयाम् ।। **को वृत्तिशब्दार्थ** इति । को वृत्त्यर्थ इति वार्त्तिकस्यायं पर्यायः । **विषयशब्दार्थ** इति । विषयार्थ इत्यस्य वार्त्तिकस्यैष पर्यायः ।।

70 वाके ।। भेद इति । मिथ्याज्ञानप्रकारः ।

389 उने ।। **सारूप्यस्य भेदाधिष्ठानतयेति** । अनेन सदृशोऽयमिति हि प्रतीतिनान्तरीयिकीति भावः । **तत्प्रतिभासने** इति । सारूप्यप्रतिभासने । **इति कृत्वेति** । इदमनेन सदृशमित्यनेनोल्लेखेनेत्यर्थः । **स एव तज्जातीयो वेति** । सामान्यापेक्षया स एव । व्यक्त्यपेक्षया तु तज्जातीयः ।।

**यथा कथञ्चित् सारूप्यमिति** । द्रव्यत्वपार्थिवत्वाद्यपेक्षा हस्तिमशकादीनामपि सारूप्यमस्तीति भावः । **अव्यवच्छेदक** इति । रजतादेः सकाशादव्यवर्तकश्चाकचक्यादिः । **व्यवच्छेदकानभिभूत** इति । शुक्तित्वादिभिर्व्यवच्छेदकैर्धर्मैरतिरस्कृतः । **तत्रेति** । मशकादौ हि लघुपरिमाणादिभिर्व्यवच्छेदकैर्धर्मैरभिभूतत्वं द्रव्यत्वादेः साधारणस्य धर्मस्य । अभिभवश्चायमेव साधारणधर्मस्य यन्मशकादिनियततया प्रतिपत्तिः ।।

391 **आरोप्यस्येति** । रजतादेः । **आरोपविषयेणेति** । शुक्त्यादिना । **पीतं चिरविल्वमिदमिति प्रत्ययानुदयादिति** । यो हि समारोप्यते स किल विपर्ययज्ञाने प्रतीयते । यथा श्वेतभासुरे द्रव्ये पुरोवर्तिनि रजतमारोप्यमाणम् । एवमत्रापि यदि पीतगुणी चिरविल्वादिः शुक्लगुणिनि शङ्खे आरोप्येत, तदा पीतं चिरविल्वमिति प्रतीतिः स्यान्नचैवं भवति पीतः शङ्ख इति प्रत्ययस्यानुभूय-

391 मानत्वात् । **शुक्लगुणस्याप्रतिभासनादिति** । श्वेतभासुरे हि द्रव्ये प्रतीयमाने एव रजतमारोप्यते ।। [५६६ ख] एवमत्रापि यदि शुक्लगुणः प्रतिभासेत तदा तत्र पीतगुण आरोप्येत । न च शुक्लगुणः प्रतिभासते । अतः कथं तत्र पीतगुणस्यारोपो घटते ?

**नापि शुक्लत्वसामान्याधारे रूपस्वलक्षणे** इति । यत्र रूपस्वलक्षणे शुक्लत्वसामान्यं वर्तते, तत्र पीतगुण आरोप्यते । परं शुक्लत्वं सामान्यं रूपस्वलक्षणवर्ति न प्रतिभाति, रूपस्वलक्षणमात्रं तु प्रतिभाति । तत्र च रूपस्वलक्षणमात्रे पीतगुण आरोप्यते । **रूपलक्षणस्य भासनायोगादिति** । यदा हि चाक्षुषप्रतीतौ गोत्वं न प्रतिभाति, तदा गोव्यक्तिरपि न प्रतिभात्येव । एवं शुक्लत्वसामान्यमपि यदि न प्रतिभाति चाक्षुषज्ञाने तदा कथं तदाधारभूतं

391 स्वलक्षणं भास्यतीति । **भासनेऽपि वा द्रव्यसामानाधिकरण्यं न स्यादिति** । पीतः शङ्ख इत्युल्लेखी प्रत्ययो न स्यात्, अपि तु पीतं रूपस्वलक्षणमिति स्यात् । एवं तावद् गुणगुणिनोरारोपो न घटत इत्युक्तम् ।

अथ सामान्यस्यारोपो न घटत इत्याह—**नापि पीतत्वमित्यादिना**। **शुक्लत्वसामान्याधारे** इति। अज्ञायमानशुक्लत्वसामान्ये रूपस्वलक्षणे इत्यर्थः। **तद्धीति** पीतत्वसामान्यम्। **तदात्मतयेति**। शुक्लत्वसामान्याधाररूपस्वलक्षणात्मतया। **तत्संसर्गितयेति**। शुक्लत्वसामान्याधाररूपस्वलक्षणसंसर्गितया। **न देशकालनियता स्यादिति**। सामान्यं हि व्यापकत्वात् न देशकालनियतम्। ततश्च शुक्लत्वसामान्याधारा व्यक्तिर्यदा पीतत्वसामान्यात्मना प्रथते, तदा तस्यानियतदेशकालतया न प्रतिभासः स्यात्। द्वयोर्हि तादात्म्ये एकमेवावशिष्यते इति पीतत्वसामान्यमेव प्रकाशेत। तच्चानियतदेशकालमिति नियतदेशकालतया प्रतिभासः कथं स्यात्? **सा चाप्रथितैवेति**। या नियतदेशकाला पीतव्यक्तिः सा न प्रथितैवेत्यर्थः। या तु शुक्लत्वसामान्याधारा रूपस्वलक्षणव्यक्तिः सा पीतत्वसामान्यात्मना प्रथितेति न प्रयोजिका देशकालनैयत्ये।

ननु च द्वयोस्तादात्म्ये एक एवावशिष्यते इति शुक्लगुणव्यक्तिरेव प्रथिष्यते नियतदेशकालतयेत्याशङ्क्य निरस्यति—**न च पीतत्वसामान्यमेव शुक्लगुणव्यक्तिरूपेणारोप्यत इति साम्प्रतमिति**। शुक्लगुणरूपा या व्यक्तिस्तया सह पीतत्वसामान्यमेकतयाध्यवसीयते यदा, तदा पीतत्वसामान्यस्य व्यक्तिरूपतापन्नेति नियतदेशकालतया प्रतिभासः सूपपन्न एवेति यदुच्यते तदपि न साम्प्रतमित्यर्थः। कुत इति चेत्—उच्यते यतः। **तथा सति पीतत्वं न प्रतीयेतेति**। यदा हि पीतत्वं सामान्यं शुक्लव्यक्तिगुणरूपतामापन्नं तदा कथं तत् प्रतीयेतेति भावः॥

नापि शुक्लत्वसामान्यमेव पीतत्वसामान्यतदात्मतयारोप्येतेति। पीतत्वसामान्येन या तदात्मता पीतत्वसामान्यात्मता तया शुक्लत्वसामान्यमेवारोप्येतेति नापि। कोऽभिप्रायः? शुक्लत्वसामान्यं पीतत्वसामान्यात्मरूपतया यदाध्यवसीयते तदा पीत[६०० क]त्वप्रतीतिरूपपन्नैवेत्येतदपि न। कुत इति चेद्—उच्यते यतः, तथा सति शुक्लत्वेन शुक्लत्वं प्रतीयेतेति। यथा श्वेतभासुरे द्रव्ये प्रतीयमाने एव रजतारोप एवं शुक्लत्वसामान्येऽपि शुक्लत्वसामान्यात्मना प्रथमाने एव पीतत्वसामान्यस्य आरोपः प्रसज्यत इति भावः।

यदा च शुक्लत्वसामान्यं प्रतीतम्, तदा किं पीतत्वारोपेण? **तस्येति**। 393 शुक्लत्वसामान्यस्य। **अस्य कल्पस्येति**। तद्धि तदात्मतया वा आरोप्येतेत्येवं रूपस्य सप्रपञ्चस्य प्रथमविकल्पस्य। **सामान्ये** इति। पीतत्वसामान्ये। **शुक्लगुणस्य शुक्लत्वेनैव प्रतीतिः स्यादिति**। यदा हि पीतत्वसामान्यस्य शुक्लत्वसामान्याधारया व्यक्त्या सह संबन्ध एव जातो न तु तादात्म्यं तदा शुक्लगुणस्य शुक्लत्वेनैव शुक्लत्वसामान्यसंबद्धत्वेनैव प्रतीतिः स्यात्। **विषयतारतम्यमिति**। क्वापि शङ्खे पीतिमा मन्दः, क्वापि बहलः, क्वचिद् बहलतरः, क्वापि बहलतम इत्येवं भ्रान्तिज्ञानेषु पीतिम्नस्तारतम्यम्॥

टीयाम्॥ **आश्रयरहितमिति**। पित्तलक्षणाश्रयरहितम्। **तदसंबद्धमिति**। शङ्खेन सह समवायभावम्।

394 उने ।। **संसृष्टस्वभावत्वमिति** । संसर्गावच्छिन्नस्वरूपत्वम् । पीतिमगुणशङ्खगुणिनोः समवायावच्छेद आरोप्यत इति यावत् । **गुणगुणिभ्यामिति** । पीतिमचिरविल्वाभ्याम् । **अनयोरिति** । पीतिमगुणशङ्खगुणिनोः । **इहेति** । आरोपे । **उपदर्शितं च तदिति** । तत्सारूप्यमारोपनिबन्धनं टीकायामुपदर्शितम् । असंबन्धाग्रहेण पीतचिरविल्वादिसामानाधिकरण्यसारूप्यादित्यनेन वाक्यशकलेन प्रकटितम् ।

अस्यायमर्थः । असंबन्धो गुणगुणिनोर्वैयधिकरण्यम् । तेनाग्रहोऽपरिच्छेदो गुणगुणिनोस्तेन कृत्वा पीतचिरविल्वादिसामानाधिकरण्येन सह सारूप्यं वैयधिकरण्यग्रहणाविषयीभूतस्वरूपत्वलक्षणम्, तस्मात् शङ्खः पीत इति विपर्यस्यति । एवं च सतीदं सिद्धं यदुत पीतगुणशङ्खगुणिनावारोपविषयौ तयोः संसर्गोऽवच्छेद आरोप्यः । तयोरेव च वैयधिकरण्यग्रहणाविषयीभूतं यत्स्वरूपं तत्सारूप्यमारोपप्रयोजकमिति ।

395 **असंबन्धाग्रहेणेति** टीकापदोपन्यस्तमसंबन्धाग्रहं व्याचष्टे—**असंबन्धाग्रहो वैयधिकरण्याग्रह इति** । वैयधिकरण्येनाग्रह इति समासः । **विषयिणा विषयमुपलक्षयतीति** । वैयधिकरण्याग्रहो विषयी । व्यधिकरणग्रहणाविषयीभूतं गुणगुणिनोः स्वरूपं विषयः । तमुपलक्षयति । अयं चात्र भावः । असंबन्धाग्रहो हि किल सारूप्यमारोपनिबन्धनमभिप्रेतम् । तथा हि यथा पीतिमचिरविल्वयोर्वैयधिकरण्येनाग्रहः, एवं पीतिमशङ्खयोः । इदं च वैयधिकरण्याग्रहलक्षणं सारूप्यं यद्यग्रहमात्रम्, तर्ह्यज्ञायमानत्वात् नारोपनिबन्धनं स्यात् । न हि सारूप्यं सत्तामात्रेण भ्रान्तावुपयुज्यते जपाकुसुमादिसन्निधानपरिभूतसि[ ि]तम्नि स्फटिकादावनुपलभ्यमानविशेषस्मरणेऽपि रजतादिविपर्यासाभावात् । तस्मादुपलभ्यमानमेव सा[ ६०० ख ]रूप्यं भ्रान्तिहेतुरित्यास्थेयम् ।।

न च पीतशङ्खसंवेदनकाले वैयधिकरण्याग्रहः परिच्छेदाभावरूपोऽनुभूयते इति कथमसौ भ्रान्तिहेतुरिति पर्यालोच्योक्त **विषयिणा विषयमुपलक्षय[ती]ति** । व्यधिकरणाग्रहणाविषयीभूतं गुणगुणिस्वरूपमेवासंबन्धाग्रहशब्देन लक्ष्यते । तदेव च सारूप्यं संमतम् । तच्चानुभूयत एवेति सर्वमनाकुलम् । तेनेत्यादौ वाक्ये इत्थं साध्याहाराक्षरघटना कार्या । **तेनेत्युक्तं भवतीति** योगः । व्यधिकरणग्रहणाविषयीभूतं ययोः स्वरूपं तयोः संसृष्टस्वभावत्वं दृष्टम्, यथा पीतिमचिरविल्वयोस्तथैव च पीतिमशङ्खयोरपि व्यधिकरणग्रहणाविषयीभूतं स्वरूपं दोषवशात् तदास्तीति संसृष्टस्वभावत्वं तयोरारोप्यते । **एकेन्द्रियोपनीतद्वयविषयमिति** । एकेन्द्रियोपनीतं च तद्द्वयं च पीतगुणशङ्खगुणिलक्षणं तद्विषयो यस्य सारूप्यस्य तत् तथा ।

टीयाम् । **त्वगिन्द्रियोपनीतमिति** । त्वगिन्द्रिये उपनीतं त्वगिन्द्रियोपनीतम्, रसनागतत्वगिन्द्रियोपारूढमित्यर्थः । **अनुभूयमानमाधुर्यमिति** । अत्यु-

त्कटपित्तप्रकोपदोषाद् गुडमाधुर्यं नानुभूयते । **आजानतिक्तस्येति** । स्वभाव-तिक्तस्य । **तदाश्रयं चेति** । तिक्तत्वाश्रयं पुनः ।।

395 उने । **तादात्म्यभ्रमेऽपीति** । शुक्तिकादौ रजतादिभ्रमे । **भेदाग्रह एवेति** शुक्त्यादिरजतादीनां भेदेन ग्रहणाभाव एव । **तदन्तरेण संस्कारानुद्बोधादिति** । चाकचक्यादिकं सारूप्यं गृह्यमाणमन्तरेणारोपयिष्यमाणप्रागनुभूतरजतगोचर-संस्कारानुद्बोधात् । रजतज्ञानजनितसंस्कारस्य भ्रमं जनयतः सतो यत् सहकारि-कारणं चाक्त्वक्यादिसारूप्यलक्षणमेव तस्याभावादित्यर्थः । ततोऽपि किमि-त्याह—**तेन च विना रजतारोपनियमानुपपत्तेरिति** । संस्कारोद्बोधमन्तरेण रजतमेवारोप्यते शुक्तिकायां न तु कपालशकलादिकमित्येवंरूपो य आरोपनियमः, तस्यानुपपत्तेः । तस्मात् रजतसंस्कारोद्बोधो रजतारोपनियमार्थमास्थेयः । संस्कारोद्बोधश्च न चाकचक्यादिग्रहणमन्तरेणेति तादात्म्यभ्रमे चाकचक्यादि-सारूप्यमुपयोग्येवेति ।

**इह त्विति** । प्रस्तुतोदाहरणद्वये पुनः । **संसृष्टानुभवजनितसंस्कारोद्बोध इति** । संसृष्टयोः पीतचिरविल्वादिकयोर्गुणगुणिनोर्योऽनुभवः, तेन यो जनितः संस्कारस्तस्योद्बोधः सहकारिलाभः । **संसर्गस्य च संसृज्यमानावेव विशेष इति** । गुणगुणिनोः संबन्धिनः संसर्गस्य गुणगुणिनावेव विशेषकावित्यर्थः । **तौ चानुभूयमानावेवेति** । पीतगुणशङ्खगुण्यादिकौ गुणगुणिनावनुभूयमानावेव । कोऽभिप्रायः ? संसर्गविशेषयोर्गुणगुणिनोर्योऽनुभवः स एव संसृष्टानुभवजनित-

396 संस्कारस्योद्बोधः ।। **इति किं तदुपनायकसादृश्यान्तरापेक्षयेति** । संसर्गढौकक-सादृश्यान्तरापेक्षया न किमपीत्यर्थः । संसर्गविशेषकगुणगुण्यनुभवेनैव संसर्ग-स्यो[ ६०१ क ]पनीतत्वादिति भावः ।।

**तथाविधापेक्षाबुद्धिविषयत्वमिति** । भ्रान्तापेक्षाबुद्धिविषयत्वम् । यदा तु चन्द्रे द्वित्वसंख्यालक्षणो गुणो नारोप्यते किं तर्हि चन्द्रोऽयमस्माच्चन्द्राद् भिन्न इत्युल्लेखेन भेदमात्रमारोप्यते तदा यत्सादृश्यमूहनीयं तदाह—**भेदमात्रारोपे तु नानादिग्देशावयवसंबन्ध इति** । घटादौ हि भेदभाजि नानादिग्देशावयवसंबन्ध

397 उपलब्धः । स चन्द्रेऽपि उपलभ्यमानो भेदारोपहेतुर्भवति । **एवमन्यत्रापीति** । प्रतीच्यां प्राचीभ्रम इत्यादौ । **मध्यासंबन्धे सर्वदिक्संबन्ध इति** । योधकर-वर्तिनश्चक्रस्य मध्यभागवर्तिनाकाशेन सह संबन्धाभावे सति सर्वदिक्संबन्ध उपलब्धः । स चालातेऽप्युपलभ्यमानश्चक्रभ्रमहेतुः । **तावद्देशाच्छादकत्वम्** । यावान् देशोऽन्येन स्थूलेन पदार्थेनाच्छाद्यते तावानेव च देशः कुन्तलकलापेनापीति । स्थूलत्वभ्रमहेतुता तावद्देशाच्छादकत्वस्य । **तरङ्गवक्रिमदण्डयोरसंसर्गाग्रह इति** । तरङ्गवक्रत्वस्य च वैयधिकरण्यं न गृह्णातीति जलमध्ये निपतितस्य दण्डस्य वक्रत्वं विपर्ययात् प्रत्येति । तरङ्गवक्रत्वयोरसंसर्गाग्रहो दृष्टः । स च जल-

398 निपतितदण्डवक्रत्वयोरप्यस्तीति सादृश्यम् । **सर्वत्र च तत्त्वाग्रहः संप्लवते इति** । सर्वविपर्ययेषु कर्तव्येषु तत्त्वाप्रतिपत्तिलक्षणो हेतुरस्तीति भावः ।।

**तैरिति**। इन्द्रियादिभिः। तेऽपि तादृशा इति। इन्द्रियादयोऽपि नात्मना विना दुःखहेतव इत्यर्थः। **निर्दोषं द्वयमप्येवमिति**। प्रसज्यत इति शेषः। अयमत्र भावः। यथेन्द्रियैर्विनात्मा न दुःखहेतुरीति कृत्वा प्रकृत्या निर्दोष इति स्वीक्रियते, तथेन्द्रियाण्यप्यात्मना विना न दुःखकारणानीति तान्यपि निर्दोषाणि प्रसज्यन्ते। न चैवम्। तस्माद् द्वयमपि हेयमेव। अत एवाह—**वैराग्यं च द्वयोस्तत** इति। द्वयोरप्यात्मेन्द्रियादिकयोर्वैराग्यं विधेयम्, न

399 त्विन्द्रियादावेवेति। **प्रतिपत्तिनिरोधलक्षणमिति**। ज्ञानाभावलक्षणम्। **स्वसंवेदनत्वादेवेति**। प्रतिपत्त्यपरपर्याया विदेवात्मा वेदान्तिनाम्। सा च स्वयंज्योतिः। अतः कथं तस्याः प्रतिपत्तिनिरोधलक्षणं हानं घटते? न हि स्वरूपस्यैव हानं युज्यते॥

**वयं तु ब्रूम** इति। नैयायिकाः सन्तो वयं पुनः प्रतिपत्तिनिरोधलक्षणहाननिराकरणायेदं ब्रूमः तद्धीत्यादिकं सत्तामात्रेणेत्येतदन्तम्। **तद्धीति**। प्रतिपत्तिनिरोधलक्षणं हानम्। अयमस्य भावः। सुतमरणादिकं हि ज्ञातं सद् दुःखहेतुर्भवतीति कृत्वा आदावेव सुतमरणगोचरज्ञाननिरोधो युक्तः। आत्मा तु सत्तामात्रेणैव दुःखहेतुरन्यथा पामरादीनामात्मज्ञानशून्यां न दुःखं स्यादतः किमात्मप्रतिपत्तिनिरोधलक्षणेनात्मनो हानेन, आत्मप्रतिपत्तेर्दुःखहेतावप्रयोजकत्वादित्यर्थः॥

टीयाम्॥ **यत** इति। आत्मनो नास्तितासमारोपात्। **न प्रवर्तत इति**। उपकारायापकाराय वा न चेष्टते॥

399 उने॥ **गुडजिह्विकेति**। रागादिनिवृत्तिहेतुर्नैरात्म्यदर्शनमिति वचनं मुख-
399 मात्रमधुरमित्यर्थः। **सापीति**। अहंकारनिवृत्तिः। [६०१ ख] **तन्मूलत्वा-**
400 **च्चेति**। मिथ्यात्वमूलत्वाच्च। **तन्निवृत्ताविति**। मिथ्यात्वनिवृत्तौ। **तयोरपीति**। रागद्वेषयोः। **स्वाकारेऽपीदन्ताव्यवहारिणामिति**। पृथग्जना हि चिद्गुणात्मस्वरूपेऽप्ययमिति व्यवहरन्तो दृश्यन्ते, न त्वयमिति। अतएवाह—न हि ते शरीरादिव्यतिरिक्तमहमिति प्रतियन्तीति। मूर्खो हि जनः शरीरादिव्यतिरिक्तं चिद्धर्माणमात्मानमहमित्युल्लेखेन न प्रतिपद्यते इत्यर्थः॥

**तस्मिन्नेवेति**। चेतने। **अदृष्टित्वप्रसङ्गादिति**। सर्वथा ज्ञानाभावप्रसङ्गा-
401 दित्यर्थः। **एतदिति**। अदृष्टित्वम्। **अदृष्टेरिति**। सर्वथा ज्ञानाभावादेवेत्यर्थः।

**ग्रहणाग्रहणयोरुभयोरप्यसंभवादिति**। ग्रहणाग्रहणयोरुभयोरपि पक्षयोरङ्गीक्रियमाणयोर्नास्तिताध्यारोपस्यासंभवात्॥ ते एव ग्रहणाग्रहणे भावयति—**यदि ह्रीत्यादिना**। **न च प्रथमं ग्रहः पश्चादारोप इति त्वया वक्तुं शक्यते** इति। आत्मनोऽत्यन्ताभावाभ्युपगमे कथं प्रथमं ग्रह इति भावः। इत्थं विकल्पत्रयीं परिशोध्य शङ्कान्तरं निराकरोति—**स्वप्रतिष्ठज्ञानमात्रेणेति चेदिति**।

401-2 स्वसंविदितज्ञानमात्रेण रागादिनिवृत्तिरभिप्रेतेति योगः । **ज्ञानस्य स्वप्रतिष्ठता-ध्रौव्येऽपि रागादिदर्शनादिति** । ज्ञानस्य स्वसंविदितत्वं सुनिश्चित्य यैर्निष्कम्पतया व्यवस्थापितं ताथागतैः तेषामपि रागादिदर्शनादित्यर्थः ॥

**तत्तद्बहिरुपप्लवविरहे सतीति चेदिति** । बहिरुपप्लवो बाह्यविषयाभिष्वङ्गादिः । तत्सहकृतेन स्वप्रतिष्ठज्ञानमात्रेण रागादिनिवृत्तिरिति यदि बौद्ध बुध्यसे । **स्वात्मप्रतिष्ठमिति** । स्वीयात्मादिविषयं तत्त्वज्ञानम् । **स्वात्मदृष्टिरपि दृष्टिर्न स्यादिति** । स्वसंविदितज्ञानलक्षणा दृष्टिर्या स्वप्नेऽपि बौद्धैर्नापह्नूयते, सापि शून्यत्वाभ्युपगमेन स्यादिति हेतुः । **अनालम्बनतया निःसंबन्धित्वमौदासीन्यमिति चेदिति** । घटपटाद्यालम्बनविरहितत्वेन केनापि विषयेण सहासंबद्धं यज्ज्ञानमात्रं स्वच्छस्वसंविदितचिद्रूपं तदौदासीन्यमित्याशयः शौद्धोदनिविनेयस्य ॥

403 **तद्दृष्टिरिति** । सन्तानदृष्टिः । **अनर्थान्निवर्तयेदिति** । अनर्थं प्राप्य निवर्तयेदिति । अर्थमासाद्य प्रवर्तयेत् । **तन्मूलत्वादिति** । प्रवृत्तिनिवृत्तिमूलत्वात् ।

404 **तयोरिति** । रागद्वेषयोः । **तादृशीति** । प्रवृत्तिनिवृत्तिद्वारेण रागद्वेषजननी । **नास्तिकत्वमेव निर्वाहयेदिति** । या हि सन्तानदृष्टिरर्थानर्थयोः प्रवृत्तिनिवृत्ती न करोति, सा नास्तित्वमेव निर्वाहयतीत्यर्थः ॥

**सर्वदुःखोच्छेदमुपकारमपश्यत** इति । सर्वदुःखोच्छेदलक्षणमात्मन उपकारमविवेचयत इत्यर्थः । अमुमुक्षोरिति यावत् । **एवंभूतस्येति** । सर्वदुःखोच्छेदलक्षणमात्मोपकारमविवेचयतः । **कश्चिदिति** । सर्वोऽपि । बौद्धमतेऽप्यात्मोच्छेदआत्महानमन्तरेण न शक्यः कर्तुमित्यात्मोच्छेदाय यतते, न तु स्वातन्त्र्येणा-

404-5 त्महानं कोऽप्युपकारत्वेन कल्पयति । **असंभव एवेति** । अघटनैव । **तुल्यः सं** [६०२ क] **सार इति** । यो हि न दुःखं जिहासति सुखं चोपादित्सति, स नैरात्म्यदर्शी वा भवतु नित्यात्मदर्शी वा भवतु, सर्वथा संसारी विवेकाभावात् । **तदुपकारायेति** । आत्मोपकाराय । आत्मनः सुखायेत्यर्थः । **सर्वदुःखोच्छेदः सुखं चेति हि विप्रतिषिद्धमेतदिति** । दुःखानुषङ्गित्वात् सुखस्य कथं सुखे सति सर्वदुःखोच्छेद इति भावः ॥

**अनेनेति** । सामान्यधर्मोऽहंकारास्पदत्वमित्यनेन । **तत्प्रवृत्तिनिमित्तस्येति** । अहमिति कर्तृपदप्रवृत्तिनिमित्तस्य । **एकदेशमिति** । संपूर्णं हि कर्तृत्वम्, इतरकारकप्रयोक्तृत्वमितराप्रयोज्यता च । शरीरे तु बाह्यकारकप्रयोक्तृता तैश्चाप्रयोज्यतास्ति । आत्मादिभिस्त्वान्तरैः कारकैः प्रयोज्यमेव शरीरमिति न तत्र

406 संपूर्णं कर्तृत्वम् । **भेदाग्रह इति** । आत्मशरीरयोः पार्थक्यापरिच्छेदे सति ॥

टीयाम् ॥ **तानिति** । इच्छाद्याधारताम् ॥

408 उने ॥ **अत्रेति** । विपर्ययस्वरूपे ॥

टीयाम् ।। केचिदिति । योगाचाराः । स्वाकारबाह्यत्वविषयमिति । ज्ञानस्वरूपस्य संबन्धी य आकारस्तस्य बाह्यत्वं तद्विषयो यस्य ज्ञानस्य तत्तथा । स्वाकारं रजतादीति । रजतादि कीदृशम् ? स्वाकारं ज्ञानाकारम् ।।

73.4 प्रतिपत्तुरिति । ज्ञानस्य । भ्रान्तं हीत्यादिना इति चेदित्येतदन्तेन परः प्रत्यवतिष्ठते । अनहङ्कारास्पदमस्य विषयो ज्ञानाकारोऽपीति । ज्ञानाकारोऽपि सन् अनहङ्कारास्पदमित्युल्लेखादहंकारस्यास्थानमस्य भ्रान्तज्ञानस्य विषयः । तन्निषेध इति पुरोवर्तित्वनिषेधः । वणिग्वीथ्यादावुपलब्धस्य रजतस्य व्यवस्थापनहेतुरिति । यदा हि पुरोवर्तिनो द्रव्यस्य रजतत्वं बाधकेन निरस्तम्, तदा वणिग्वीथ्यादौ उपलब्धस्य श्वेतभासुरद्रव्यविशेषस्य सुव्यक्तमेव रजतत्वं व्यवस्थापितं भवतीति भावः ।।

409 उने ।। ज्ञानस्यात्मा पुरोवर्ति चेति । ज्ञानात्मा तावत् स्वसंविदितत्वात् प्रतिभाति । पुरोवर्तिसकलजनप्रतीतमेव कस्तत्प्रतिभासने सन्देहः । अर्थादापद्यते ज्ञानस्येति । नेदं रजतमित्यनेन हि बाधकेन यदा पुरोवर्तिनो रजतत्वं प्रतिसिद्धं तदा सामर्थ्याज् ज्ञानस्यैव रजतत्वमापन्नम् । न तु वणिग्वीथिवर्तिनो द्रव्यविशेषस्य तस्य तदानीमत्यन्तमप्रतीयमानत्वात् । अतएवाह—तदन्येषां तु प्रतिपत्त्यनारोहादनवकाश इति । अस्फुरणाद् रजतत्वस्यानवकाशोऽप्रसङ्गः ।

यद्धि यस्य कदाचित् प्रमाणादवगतं तदन्यत्र प्रतिषेधे परिशेषात् तत्र गम्यत इति । यत् सत्यरजतादिकं हिर्यस्मात् यस्य वणिग्वीथ्यादेः संबन्धितया कदाचित् पूर्वकाले प्रमाणादवगतं भवति, तत् सत्यरजतादिकमन्यत्र मुक्ताकरतीरवर्तिशुक्तिशकलादौ प्रतिषेधेनेदं रजतमित्यादिना बाधकेन कृते सति परिशेषात् तत्र वणिवीथ्यादौ गम्यते । न तु प्रतीतिपथमनवतीर्णयोरन्यतरत्र प्रतिषेधे पारिशेष्यादितरत्रासंभावितमपीति । न तु नैव पुनः प्रतीतिपथमनवतीर्णयो ज्ञानात्मपुरोवर्तिनो रजतत्वेन कृत्वा प्रमाण [ ६०२ ख ] जन्यप्रतीतिपथमनवतीर्णयोर्मध्यादन्यतरत्र पुरोवर्तिनि प्रतिषेधे सति रजतत्वस्य पारिशेष्यादितरत्र ज्ञानात्मनि क्वापि काले यन्न संभावितं न दृष्टपूर्वं रजतत्वं तदपि गम्यते इति पूर्वमेवानुषज्यते ।

इदमैदम्पर्यमत्र । वणिग्वीथ्यादौ प्रागरजतमुपलब्धपूर्वमिति पुरोवर्तिनि प्रतिषिध्यमानस्य तस्य वणिग्वीथ्यादौ परिशेषात् सिद्धिर्युक्ता । ज्ञानात्मनि तु रजतत्वं न कदाचिदुपलब्धपूर्वमतः कथं पुरोवर्तिनि प्रतिषिद्धमानं तज्ज्ञाना-

410 त्मनि परिशेषात् सिध्यति । तदेकज्ञानसंसर्गिण इति । शुक्तिकया सहैकज्ञानसंसर्गिणः । विदध्यादिति । अत्र नेदं रजतमिति कर्तृपदम् । न चैवमिति । भूतलादे रजतत्वं न कदाचिद् विधत्ते बाधकप्रत्यय इत्यर्थः । तस्येति । भुतलादेः । अनेनेति । भ्रान्तरत्वं तस्यानुपलब्धचरं कुतस्त्यमित्यनेन टीकाग्रन्थेन दर्शित इति प्रतिपादितः ।।

**तथा नाहं रजतमित्यपि बाधकं स्फुटमेवेति।** यथा नेदं रजतमित्यनेन बाधकेन पुरोवर्तिनो रजतत्वं बाध्यते, तथा नाहं रजतमित्यनेन बाधकेन ज्ञानात्मनो रजतत्वं बाध्यत इति भावः। अयमेव भ्रम इति चेदिति। नाहं रजतमित्येवं रूपं यद्बाधकं भवतोक्तं तदेव भ्रमः। किमुक्तं भवति? य एवेदं रजतमिति भ्रमः, स एव नाहं रजतमिति भ्रमः। इदं रजतं नाहं रजतमित्येकार्थो द्वावपि शब्दौ यतः, ततश्च नाहं रजतमिति भ्रमः कथं बाधकतया भवता कल्प्यते। न हि भ्रमः कस्यचिद् बाधायै समभ्युपगन्तुं युक्तोऽतिप्रसङ्गात्।

411 **तस्मिन्नेवेति।** रजते। **अहमास्पदे इति।** अहङ्कारास्पदे। ज्ञानात्मस्वरूप इति यावत्। **बाधकप्रत्ययेनेति।** नेदं रजतमित्यनेन। **तदेवेति।** बाह्यत्वम्। **अहं रजतमिति स्यादिति।** नेदं रजतमित्यनेन बाधकेन बाह्यत्वे रजतत्वस्यापनीते अहं रजतमिति प्रत्ययः स्यादित्यर्थः। **समुच्चयाभिमानोऽपीति।** एकत्र प्रवृत्त्य-

411 भिमानोऽपि। **नेदं रजतं नाहं रजतमित्यनयोरपि विरोधादिति।** नेदं रजतमित्यस्य हि अहं रवतमित्यर्थो यदा जातस्तदा नेदं रजतं नाहं रजतमित्यनयोर्विरोधः प्रकट एव। **अस्ति चेति॥** नेदं शुक्त्यादि रदतं तथा नाहं ज्ञानात्मा रजतमित्येवमेकत्रैव रजते नेदं रजतं नाहं रजतमिति प्रत्यययोः समुच्चयाभिमानोऽस्ति। **उभयोरपीति।** ज्ञानात्मपुरोवर्तिनोः। **तदन्यस्येति।** ताभ्यां ज्ञानात्मपुरोवर्तिशुक्तिशकलाभ्यामन्यत् तदन्यत् वणिग्वीथिगतं श्वेतभासुरं द्रव्यं तस्य। **दुरुत्तरपांसुपूरणमात्रेणापनेतुं शक्यते इति।** दुष्टोत्तराण्येव पांसुपूरणमात्रं तेनापनेतुं शक्यते पाषाणरेखेयम्॥

73.12 टीयाम्॥ **न हि विषयत्वं नाम कारणत्वं येनासति न स्यादिति।** विषयत्वं हि प्रतिभास्यत्वं परिच्छेद्यत्वमित्यर्थः। न तु कारणत्वं विषयत्वं येनाविद्यमाने रजते न स्यात् कारणत्वविलक्षणविषयत्वमित्यर्थः। अथ कथं नाम ज्ञानेनाविद्य[६०३ क]मानं रजतादिकं प्रतिभास्यते—**किं त्वित्यादि॥**

412 उने॥ **अतिशयस्तु विषयजन्यविज्ञानापेक्षयेति।** सदालम्बनं ज्ञानमपेक्ष्य असदालम्बनज्ञानस्य सामर्थ्यातिशयः इति भावः। **सत्यज्ञानाभिप्रायमिति।** यथा वणिग्वीथ्यादौ सत्यरजतगोचरं ज्ञानं सन्तमर्थं गोचरयति, तद्वदिदमसन्तमपि

413 रजतलक्षणमर्थं गोचरयतीत्यभिप्रायः। **स्वरूपाभिप्रायमिति।** स्वसंविदितत्वात् सर्वज्ञानानां बौद्धमते यथा मिथ्याज्ञानं स्वात्मानं सन्तं गोचरयति, तद्वद्बाह्यं विषयमसन्तमपि गोचरयतीति भावः। **अतएवेति कृत्वेति।** अतएवेत्यादिनेत्यर्थः॥

73 टीयाम्॥ **अत्रेति।** असत्ख्यातिमते। **असत्सदात्मनेति।** असत्किमपि रजताद्यात्मना गृह्णातीत्यर्थः। **सदेव सदन्तरात्मनेति।** सदेव विद्यमानमेव शुक्त्यादिकं सदन्तरात्मना रजताद्यात्मना गृह्णाति। ननु यदि सदेव सदन्तरात्मना गृह्णाति, तर्हि कथमसद्विषयमित्याह—**सतश्च सदन्तरात्मत्वेनासत्त्वादसद्विषयमुच्यते**

इति। शुक्तिर्हि रजतात्मना न विद्यत एवेति तां रजतात्मना गृह्णत् ज्ञानम् असद्विषयं निगद्यते ।। **रजतात्मना चेदसदालम्बेतेति**। असत्खरविषाणप्रख्यं किमपि रजतात्मना चेदालम्बेत ।। **न सतीं शुक्तिकामेति**। बहिर्विद्यमानां शुक्तिकां रजतात्मना नालम्बेत। **तदाकारतयेति**। रजताकारतया ।।

नन्वसत्ख्यातिं दूषयता टीकाकृता असत्सदात्मना गृह्णातीति सदेव सदन्तरात्मना गृह्णातीति च यथा विकल्पितम्, तथा असदसत्त्वेन गृह्णातीति किमिति
413 न विकल्पितमित्याशङ्काम् उदयनः परिहरन्नाह—**असदसत्त्वेनेत्यादिना**। **अतिनिर्बलत्वादिति**। अतिशयेन बलविकलत्वात्। अतिनिर्बलत्वमेव भावयति—**प्रवृत्तीत्यादिना**। **प्रकृते** इति। मिथ्याज्ञाने ।। **इत्यादिनाशङ्कितमिति**। असदेव रजतं प्रकाशते परं पुरोवर्तिना शुक्तिशकलेन सह भेदस्याग्रहात् शुक्तौ प्रवृत्तिर्नान्यत्र घटादौ इत्यादिकं नैवाशङ्कितं टीकाकृता। कुत इति चेत्—उच्यते। **प्राभाकरपक्षेण तुल्ययोगक्षेमत्वादिति**। व्यक्तम् ।।

73.25 टीयाम् ।। **मिथ्याज्ञानसमये सत्त्वेनेति**। इदं रजतमित्येवंरूपं मिथ्याज्ञानं सत्त्वेन रजतं निश्चितं वक्तीत्यर्थः। **बाधकसमये चासत्त्वेनेति**। नेदं रजतमिति बाधकं रजतस्यासत्त्वं निश्चितं वक्तीत्यर्थः। **एवंभूतस्येति**। मिथ्याज्ञानसमये यत् सत्त्वेन निरुच्यते बाधकसमयसत्त्वेन तस्यासतः ।।

उने ।। **निरुक्तिविरह एवेति**। इदं रजतं नेदं रजतमित्येवंरूपाया निश्चि-
115 तोक्तेरभाव एवेत्यर्थः। **आद्येऽसत्ख्यात्यभ्युपगमप्रसङ्ग इति**। यदा हि भावरूपो विषयो मिथ्याज्ञानस्य संबन्धिन्या निरुक्तेर्निमित्तं नास्ति, तदा नूनमसन्नेव विषयः स्यादित्यसत्ख्यात्यभ्युपगमप्रसङ्गः। **यथोभयोर्विधिर्नास्ति तथा प्रतिषेधोपीति**। लोकप्रतीतयोर्हि भावाभावयोरेकस्मिन् विषये समकालं विधिर्नास्ति। न हि यस्मिन् समये घटस्य भावविधिस्तस्मिन्नेव तदभावस्यापि विधिः। तथा [ ६०३ख ] प्रतिषेधोऽपि भावाभावयोरेकस्मिन् विषये समकालं नास्ति। न हि यदैव घटभावस्य निषेधः, तदैव घटाभावस्यापि निषेधः। **परस्परविधिनिषेधयोर्निषेधविधिनान्तरीयकत्वादिति**। भावस्य यौ विधिनिषेधौ तावभावस्य निषेधविधिनान्तरीयकौ। अभावस्यापि यौ विधिनिषेधौ तौ भावनिषेधविधिनान्तरीयकाविति भावः ।।

**पूर्ववत् प्रसङ्गः** इति। निस् तावत् प्रतिषेधार्थः। स्वभावशब्दोऽपि भावार्थश्चेत् तदा अनिर्वचनीयत्वमिति कोऽर्थः ? निर्गतभावत्वम्। भावश्चेन्निर्गतः, तदा नूनमभाव आयात इत्यसत्ख्यात्यभ्युपगमः। अथ स्वभावशब्दोऽभावार्थः, तदा निर्वर्तनीयत्वमिति कोऽर्थः ? निर्गताभावत्वम्। अभावश्चेन्निर्गतः, तदा नूनं भाव आयात इति सत्ख्यातिरेवेति पूर्ववत्प्रसङ्ग इत्येतस्य शब्दस्यार्थः ।।
73.27 टीयाम् ।। **बुद्धिर्नो न बहिरिति**। अद्वैतवादिनां मते यः प्रपञ्चो बौद्धानां

च मते यत्सामान्यादि तत् नो नैव बुद्धिः । कोऽभिप्रायः ? आन्तरं तावन्न भवति, नापि बहिः किं त्वलीकमेव खरविषाणप्रख्यमित्यर्थः ।।

416.8 उने । **न च तदस्तीति** । न पुनस्तत्सादृश्यमत्यन्तासतः प्रपञ्चसामान्यादे

417.1 केनचित् सहास्ति । **तत्त्वयेति** । सत्तया । **विचार्यसंविद्विरुद्धमिति** । विचार्या चासौ संविच्च तया विरुद्धम् । कस्याञ्चिदपि संविदि विचार्यमाणायां सत्यामन्यदन्यथा प्रकाशते इति न घटते इत्यर्थः ।।

74.3 टीयाम् ।। **सद्भावमात्रेणेति** । सत्तामात्रेण ।।

417.2 उने ।। **अतीतानागताज्ञानापत्तिश्चेति** । अतीतानागतानां सत्तामात्रस्याभावादज्ञेयता आपद्यते इत्यर्थः । **औत्सर्गिककार्यानुकूलसहकार्यभिप्रायेण श्यामाकबीजमुदाहृतमिति** । औत्सर्गिकं हि कार्यं श्यामाकबीजस्य श्यामाकाङ्कुर एव । ततश्चौत्सर्गिकस्य कार्यस्यानुकूलं यत् परिकर्मसहस्रलक्षणं सहकारिकारणं तत्समवधानेऽपि श्यामाकबीजं स्वाङ्कुरमेव जनयति, न विजातीयं कलमाङ्कुरमिति यथा । तथा चक्षुरादीनामप्यौत्सर्गिकं कार्यं समीचीनमेव ज्ञानम् । ततश्च तदनुकूलालोकादिसहकारिकारणकालापसमवधानेऽपि चक्षुरादयः स्वकार्यमेव समीचीनज्ञानलक्षणं जनयेयुर्न विजातीयं मिथ्याज्ञानमिति भावः । **तत्प्रतिरोधिकारणान्तरसाहित्याभिप्रायेण कूटजबीजमिति** । तस्यौत्सर्गिककार्यस्य प्रतिरोधिविबन्धकं यत् कारणान्तरं सहकारित्वं तदभिप्रायेण कुटजबीजमुदाहृतम् । तथा हि यथा कुटजबीजं कुटजाङ्कुरलक्षणौत्सर्गिककार्यप्रतिरोधकदोषसहितं सत् न न्यग्रोधाङ्कुरलक्षणं विपरीतं कार्यं जनयति, तद्वत् चक्षुरादयोऽपि सम्यग्ज्ञानलक्षणौत्सर्गिककार्यप्रतिद्वन्द्विकाचकामलादिदोषसहिता अपि न मिथ्याज्ञानलक्षणं विजातीयं कार्यं जनयेयुरिति ।।

74.14 टीयाम् । **तद्गतस्येति** । पुरोवर्तिद्रव्यमात्रगतस्य । **तन्मात्रं वेति** । पुरोवर्तिद्रव्यमात्रम् । **सदृशतयेति** । पुरोवर्तिद्रव्यमात्रस्य रजतसदृशतया । **गृहीतग्रहणस्वभावापीति** । गृही[ ६०४ क ]तस्य ग्रहणं गृहीतग्रहणं तत्स्वभावो यस्याः सा तथा । तद्रजतमित्युल्लेखस्वभावापीत्यर्थः । **गृहीतत्वांशमोषेणेति** । तदित्यंशाननुभवेनेत्यर्थः । **ग्रहणमात्रमवतिष्ठत** इति । रजतमित्युल्लेखमात्रम् अवतिष्ठते इत्यर्थः । **मिथः स्वरूपतश्च विषयतश्च भेदाग्रहादिति** । मिथः परस्परं भेदस्याग्रहात् कथं मिथो भेदाग्रह इत्युच्यते । स्वरूपतश्च विषयतश्च । स्मरणग्रहणयोः स्वरूपस्य भेदाग्रहणम् । तद्विषयभूतयो रजतशुक्तिशकलयोर्वा भेदाग्रहणमित्यर्थः ।। **सन्निहितरजतविषयविज्ञानसारूप्येणेति** । सन्निहितरजतविषयं यद्विज्ञानं सत्यरजतविज्ञानमित्यर्थः । तेन सह सारूप्यं सादृश्यं तेन । यथा सत्यरजतविषये बोधे इदं रजतमित्येवंलक्षणे इदमंशरजतांशयोर्भेदो न गृह्यते तथा प्रस्तुतयोरपि ग्रहणस्मरणयोरिति भावः ।। **भिन्ने** इति । प्रथमाद्विवचनान्तं पदम् । एवं ग्रहणस्मरणे इत्यपि ।। **अभेदव्यवहारमिति** । रजतार्थिनः

पुरोवर्तिनि शुक्तिशकले प्रवृत्तिलक्षणम्। **ग्रहण एवेति**। ग्रहणे एव कर्तृणी। न तु ग्रहणस्मरणे इत्यर्थः। **गुणरहित इति**। शौक्ल्यगुणरहित इत्यर्थः॥

417.7 उने॥ **अग्रहो वा स्यादिति**। अग्रहो भेदस्याग्रहणम्। **इदमिति ज्ञानं वेति**। केवलमेवेदमंशविषयज्ञानमित्यर्थः। **रजतमिति ज्ञानसहितं वेति**। इदमिति ज्ञानं प्रवर्तकं परं रजतज्ञानसहितम्। उभयमपि मिलित्वा प्रवर्तकमित्यर्थः। **भेदाग्रहसहितं वोभयमिति**। इदं रजतमिति द्वे ज्ञाने तृतीयश्च भेदाग्रह इति त्रयं समुदितं सत्प्रवर्तकमिति चतुर्थविकल्पार्थः।

टीयाम्। **अज्ञानात् प्रवर्तत इति**। भेदाग्रहो ह्यज्ञानम्। अतः कथम् अज्ञानस्वरूपाद् भेदाग्रहाच्चेतनस्य प्रवृत्तिः? **पुरोवर्तिवस्तुग्रहणमिति**। इदमिति ज्ञानमित्यर्थः। **रजतज्ञानादिति**। रजतस्मरणादित्यर्थः। **स्वरूपतो विषयतो वेति**। द्वयोरपि ज्ञानयोर्ग्रहणस्मरणलक्षणयोः स्वरूपभेदो न गृहीतः। तद्विषययोश्च रजतपुरोवर्तिनोर्भेदो न गृहीत इति भावः। **तन्मात्र गोचरमेवेति**।
75.1 पुरोवर्तिवस्तुमात्रगोचरमेव। **न हि वृक्षमात्रदर्शनं निश्चयेन शिंशपार्थिनं तत्र प्रवर्तयतीति**। वृक्षत्वसामान्यमात्रे दृष्टेऽपि न निश्चयेन शिंशपार्थी तत्र वृक्षत्वमात्रे प्रवर्तते भेदाग्रहेऽपि सति वृक्षत्वशिंशपात्वयोः। एवं पुरोवर्तिवस्तुमात्रगोचरे ज्ञाने समुत्पन्नेऽपि न रजतार्थिनस्तत्र निश्चयेन प्रवृत्तिरुपपद्यते भेदाग्रहेऽपि सति। निश्चयेनेति किमर्थमुक्तमिति चेदुच्यते, कोऽपि प्रमाता वृक्षत्वसामान्यमात्रोपलम्भेऽपि सति शिंशपार्थी प्रवर्तमानो दृश्यते न तु सर्वोऽपीति निश्चयेनेत्युक्तम्। इह तु प्रस्तुते ज्ञाने रजतार्थी नियमेन प्रवर्तमानो दृश्यत इति तात्पर्यम्। अतएव वक्ष्यमाणे प्रयोगे नियमेन प्रवर्तकत्वादिति वक्ष्यति। **तत्रेति**। एवं सतीत्यर्थः। **पुरोवर्तिद्रव्यमात्रार्थीति**। यदा पुरोवर्तिद्रव्यज्ञानं रजते वर्तते, तदा य एव पु[६०४ख]रोवर्तिद्रव्यमात्रार्थी स एव पुरोवर्तिनि प्रवर्तेत न तु रजतार्थीत्यर्थः। **न हि तत्रेति**। पुरोवर्तिनि। **इदं रजतमिति ज्ञाने इति**। प्रथमाद्विवचनान्तं पदम्। **एकज्ञानसदृशे इति**। एतदपि प्रथमाद्विवचनान्तम्। **तदुचितमिति**। एकज्ञानोचितम्। **एवमभेदाग्रहादिति**। इदं प्रत्यक्षरजतस्मरणयोरभेदग्रहे सति विपरीतख्यातिरेव स्यादिति कृत्वा प्राभाकरस्य अभेदाग्रहः संमत एव। **उभयत इति**। आकृष्यमाण इति योगः। **भेदाभेदाग्रहणसारूप्यादिति**। अभेदस्यागृह्यमाणत्वाद् भेदग्रहेण सारूप्यम्। भेदस्य त्वगृह्यमाणत्वादभेदग्रहेण सारूप्यमिति भावः। **भेदाग्रहस्य व्यापार आस्थेय इति**। प्रथमं प्रत्यक्षेण श्वेतभासुरं द्रव्यं रजताद् भिन्नं न प्रत्येत्येवेति कृत्वा श्वेतभासुरद्रव्यग्रहणानन्तरं विपर्येति। अतो विपर्ययज्ञानोत्पादेऽभेदाग्रहस्य व्यापारः स्वीकार्यः। **अभेदाग्रहादिति**। विपर्ययोत्पादात् पूर्वं शुक्तिरजतयोर्भेदोऽपि न गृहीत एव यतः। विपर्यय एव हि रजतशुक्तिशकलयोरभेदग्रहस्वरूपेणापरं किञ्चिदपि ज्ञानमिति विपर्ययोत्पत्तेः प्राक् शुक्तिरजतयोरभेदाग्रहः संमत

एव विपरीतख्यातिवादिनाम् । अज्ञानवासनानिबन्धन इति । भेदाग्रहवासनानिमित्तक इत्यर्थः । एवं च विपर्ययज्ञानोत्पादेऽपि भेदाग्रहस्य व्यापार आस्थेय इति दृढीकृतम् ।।

418.3 उने ।। चतुर्थे तु साम्यापादने सतीति । भेदाग्रहसहितं चोभयमित्येवंलक्षणो हि चतुर्थो विकल्पः अथेदं रजतमिति ज्ञाने इत्यादिना टीकाग्रन्थेनोपन्यस्य दूषितः । तदनन्तरं स्यादेतदित्यादिना टीकाग्रन्थेन भ्रम इत्येतदन्तेन प्राभाकरेण चतुर्थे विकल्पे साम्यमापादितं भेदाग्रहलक्षणम् । ततस्तस्मिन् साम्यापादनेन परेण कृते सति इदं विचार्यते । ज्ञानधर्मो वा अग्रहो विशेषणं वस्तुधर्मो वेत्यादि । ज्ञानयोरनुभवस्मरणलक्षणयोरग्रहो भेदस्य ? उत वस्तुनोः शुक्तिरजतयोर्भेदस्याग्रह इत्यर्थः । विशेषणमिति । भेदाग्रहसहितं चोभयमित्येवंलक्षणे हि चतुर्थे विकल्पे उभयमिति विशेष्यम् ।
419.1 अग्रहसहितमिति तु विशेषणम् । इति सूपपन्नं विशेषणत्वमग्रहस्य । अनभ्युपगमादिति । न ह्यनुभवस्मरणलक्षणं ज्ञानद्वयमगृहीतभेदं भ्रान्तिहेतुरिति विपरीतख्यातिवादिनः स्वीकुर्वते । प्रवृत्तावकिञ्चित्करत्वमिति । विषयधर्मो हि अजातः सन् प्रमातारं न प्रवर्तयत्येव । एवं च सति शुक्तिरजतलक्षणविषययोर्भेदोऽगृहीतः सन् कथं पुरोवर्तिनि प्रमातारं प्रवर्तयति प्राभाकरमते ?

विपरीतख्यातिवादिनस्तु मते भेदाग्रहो न प्रवर्तकः किंतु अगृह्यमाणो भेदो विपरीतज्ञानजनकः । अतएवाह ज्ञप्तौ पुनरस्त्येवेति । किञ्चित्करत्वमिति योगः । अज्ञाता अपि विषयधर्मा ज्ञानं जनयन्त्येव । एवं च सति शुक्तिरजतयोर्भेदो जातः सन् विपरीतार्थज्ञप्तिं करोत्येवेति सिद्धम् । [६०५क] अतः कथं प्राभाकरेण सह साम्यं विपरीतख्यातिवादिनाम् ? स हि भेदाग्रहं प्रवर्तकं ब्रूते । विपरीतख्यातिवादी तु विपर्ययजनकत्वं भेदाग्रहस्याभिधत्ते न प्रवर्तकत्वम् । प्रवर्तको हि विपर्यय एव विपरीतख्यातिवादिन इति साम्यगन्धोऽपि नास्ति ।। तत्रेति ज्ञप्तिकिञ्चित्करत्वे ।।

टीयाम् ।। नैवं ज्ञानहेतूनां अज्ञातरूपकार्यसंबन्धानां चक्षुरादीनां दर्शनादिति । नैवं वाच्यं चक्षुरादीनां ज्ञानहेतूनां दर्शनात् । कीदृशानाम् ? अज्ञातरूपकार्यसंबन्धानाम् । अज्ञातरूपः कार्येण सह संबन्धो येषां ते तथा, तेषाम् । किमुक्तं भवति ? अज्ञातस्वभावान्यपि चक्षुरादीनि यथा ज्ञानं जनयन्ति, तथा शुक्तिरजतगतो भेदः अगृह्यमाणोऽपि विपर्ययमिदं रजतमित्येवं रूपं जनयन्तीति ।

उने ।। तदिदमुक्तं नैवमित्यादीति ।। अत्र पक्षे दृष्टान्ततया टीकाग्रन्थो न व्याख्येयः, किं त्वदृष्टकारणपरतया । ततोऽयमर्थः । यद्यपि भेदाग्रहलक्षणं कारणमुभयत्र समानं तथापि चक्षुरादीनि अदृष्टकारणानि, तैर्भ्रमो जन्यते, न तु प्रवृत्तिरज्ञातत्वादेव । न तु दृश्यकारणसाम्येऽपि इत्युक्तम् । तत् किं भेदाग्रहो

दृश्यः ? उच्यते। द्रष्टुं योग्यो हि भेद इति तदग्रहोऽपि द्रष्टुं योग्य इति दृश्यत्वेनोपचर्यते। **ममाप्येवमिति चेदिति।** यथा तथादृष्टो हेतुर्भ्रमहेतुः, तथा मम प्रवृत्तिहेतुर्भविष्यतीति प्राभाकराभिप्रायः। **तस्य कारणविशेषस्येति।** अदृष्टस्य कारणविशेषस्य। **स्वातन्त्र्येणाप्रवर्तनादिति।** ज्ञाननिरपेक्षस्य सतः प्रवृत्तेरजनकत्वादित्यर्थः। **ज्ञानद्वारेति चेदिति।** जायमानयो रजतशुक्तिलक्षणयोरर्थयोर्यो भेदस्याग्रहः स प्रवर्तको न तु स्वतन्त्र इत्यर्थः। **तस्येति।** ज्ञानद्वाराप्रवृत्तिहेतुत्वेन प्राभाकराभिमतस्याग्रहस्य। **प्रवृत्तिनिवृत्तिसाधारण्यादिति।** यथा भेदाग्रहात् प्रवर्तते तथैवाभेदाग्रहान्निवर्ततापीति भावः। **सामान्यज्ञानस्य विशेषे प्रवर्तकत्वव्युदासावद्योतनार्थमिति।** वृक्षत्वसामान्यविषयं हि ज्ञानं कदाचित् शिंशपादिविशेषविषयां प्रवृत्तिं जनयति। न तु जनयत्येवेति नियमेनेति हेतुविशेषणेन निश्चयेनेत्येतत्पर्यायेण व्युदस्यते। नन्वन्यविषयमपि ज्ञानमन्यत्र प्रवर्तयति यथा स्वर्गादिफलविषयं ज्ञानं यागादौ साधने इत्यनैकान्ति-

420 कत्वमित्याशङ्क्याह—**न च फलज्ञानेऽनैकान्तिकत्वमिति।** फलज्ञानेनेति कोऽर्थः ? कार्यत्वबोधेनेत्यर्थः। कार्यं स्वर्ग इति हि ज्ञात्वा तत्साधने यागे प्रवर्तते। **तस्याप्रवर्तकत्वादेवेति।** फलज्ञानं हि नैयायिकमतेन प्रवर्तकं न भवति। तर्हि किं प्रवर्तकमित्याह—**तत्साधनज्ञानं तु प्रवर्तकमिति।** तस्य फलस्य यत्साधनं यागादि तद्विषयं ज्ञानं पुनः प्रवर्तकम्। **कार्यत्वबोध इति।** फलज्ञानमित्यर्थः॥

टीयाम्॥ **यच्चोक्तमिति।** अनवभासनात् शुक्तिरनालम्बनमित्येतदार्थ्या वृत्त्या प्रागुक्तम्। तथा च रजतप्रतिभासं शुक्तिकालम्बनमिति दुर्घटमिति वदता टीकाकृता॥

उने॥ **हेतुपक्षेऽसि[ ६०५ ख ]द्धत्वं सिद्धसाधनं वा दूषणमिति। अनवभासमानत्वादिति।** अयं च यथा असिद्धः सिद्धसाधनतादोषदुष्टो वा तथा टीकाकृता प्रदर्शितः। **प्रत्यक्षोपवर्णने त्विति।** अनवभासनादिति कोऽर्थः ?

421 शुक्तिकायाः प्रत्यक्षे प्रतिभासाभावादित्यर्थः। **दोषवत्त्वादिति हेतुपक्षेऽनैकान्तिकत्वोद्भावनमिति।** चक्षुरादयो विपरीतकार्यजनका न भवन्ति दोषवत्त्वात् कुटजबीजवदिति हि प्रागुक्तमार्थ्या वृत्त्या टीकाकृता, न खलु कुटजबीजमित्यादि वदता। अत्र च दोषवत्त्वादिति यदि हेतुर्विवक्षितस्तदा अनैकान्तिको वेत्रबीजैरिति प्रत्युत्तरं टीकायाम्। **दृष्टान्तमात्राभिधाने त्विति।** न खलु कुटजबीजमित्यादिना पूर्वपक्षग्रन्थेन दोषवत्त्वादिति हेतुर्न विवक्षितः, किं तु दृष्टान्तमात्रमभिप्रेतमिति यदि नेदं रजतमित्युपलक्षणं शुक्तिरियमित्यपि प्रष्टव्यमिति। नेदमिति चेति टीकायां यदुक्तं तस्यायमर्थो नेदं रजतमिति। इदं चोपलक्षणम्, तेन शुक्तिरियमित्यपि द्रष्टव्यम्। ततोऽयमर्थः। कस्यापि नेदं रजतमिति निषेधमुखेन बाधकं प्रवर्तते, कस्यापि तु शुक्तिरियमिति विधिमुखेन॥

**अनाश्वासास्त्विति।** अपि च स्वगोचरव्यभिचारे विज्ञानानां सर्वज्ञाना-

श्वासप्रसङ्ग इति ग्रन्थेन यष्टीकायामुक्तः पुनरनाश्वासः । **प्रामाण्यज्ञानोपाय-कथनेनेति** । प्रमाणतोऽर्थप्रतिपत्ताविटयत्रादिवाक्ये यत् प्रामाण्यकथनं तेन ।।

76.5 टीयाम् ।। **यथायोगमिति** । यथासंभवम् । अनित्ये नित्यमित्यादिकं हातव्ये प्रतिपत्तव्यमित्येतदन्तं मिथ्याज्ञानं शरीरादिषु मनःपर्यन्तेषु पञ्चसु यथा-संभवं प्रतिपत्तव्यमिति भावः । **प्रवृत्त्यादिषु शृङ्गग्राहिकयोक्तमिति** । अत्र प्रवृत्तिदोषप्रेत्यभावापवर्गेषु शृङ्गग्राहिका भाष्ये सुखेन प्रतीयते । फलदुःखयोस्तु शृङ्गग्राहिका नास्ति कर्मफलमित्यन्तेन भाष्यशकलेन प्रत्येतव्या । **दुःखस्यापि फलत्वात् फलशब्देनोपादानमिति संप्रतीति** । उक्तमित्युत्तरेण योगः । **तद्दुःखा-दीनामिति** । यद्विपरीतक्रमाभिधानं तत् किमर्थम् ? उच्यते । दुःखादीनां मिथ्याज्ञानपूर्वकत्वेन मिथ्याज्ञानस्य च दुःखादिपूर्वकत्वेनानादितां दर्शयितुम् । **नैषां स्वरूपमिति** । एषां दुःखादीनां यत्स्वरूपं तन्न संसारः । तर्हि किं संसार इत्याह—अपि तु कार्यकारणभाव इत्यर्थ इति । दुःखादीनां यतः कार्यकारण-भावः प्रेत्यभावापरनामा संसार इत्यर्थः । **जन्मद्वारेणेति** । धर्माधर्माभिधानया हि प्रवृत्त्या जन्म जन्यते । जन्मना च मिथ्याज्ञानमित्येवं जन्मद्वारेण प्रवृत्तिरपि मिथ्याज्ञानकारणत्वम् । प्रवृत्तिद्वारेण च दोषमिति । दोषाः प्रवृत्तिं धर्मा-धर्माभिधां जनयन्ति । प्रवृत्तिश्च जन्म जनयति । जन्म च मिथ्याज्ञान-मित्येवं प्रवृत्तिद्वारेण दोषाणां मिथ्याज्ञानकारणत्वम् । एवं तावन्मिथ्याज्ञानस्य कार्यं दर्शितम् । अथ कारणत्वमुपदर्शयन्नाह—**मिथ्याज्ञानाद् दोषा** इत्यादिना । प्रवृत्तिरेव साक्षाद् दुःखहेतुरिति । धर्माध[ ६०६ क ]र्मात्मिका प्रवृत्तिरेव साक्षाद् दुःखहेतुः, न तु जन्म । **अनायतनस्येति** । जन्मलक्षणाश्रयरहितस्य । **तस्येति** । दुःखस्य । **अथ सैव दुःखमिति** । जन्म कृत्वा सैव प्रवृत्तिः पश्चाद्

77.15 दुःखं करोतीति भावः । **अन्योन्याश्रयमिति** । दुःखजन्मप्रवृत्तिदोषसिद्धौ मिथ्याज्ञानं सिध्यति । मिथ्याज्ञानसिद्धौ च दुःखादय इत्यन्योन्याश्रयम् । **चक्रकं वेति** । दुःखजन्मप्रवृत्तिमिथ्याज्ञानमित्येकं पदम् । मिथ्याज्ञानाद् दोषा इति द्वितीयम् । दोषेभ्यः प्रवृत्तिः, प्रवृत्तेर्जन्म, जन्मनो दुःखमिति तृतीयम् । ततः पुनरपि दुःखजण्मप्रवृत्तिदोषेभ्यो मिथ्याज्ञानमित्यादिना क्रमेण पदत्रयावर्तना

78.3 चक्रकमिति संभाव्यते । **तस्याशुतरविनाशिनः संस्काराद् वा ज्ञानान्तराद्वापायस्य तत्त्वज्ञानसाधारण्येन तस्यापि बाध्यत्वप्रसङ्गादिति** । अत्र वाक्ये इत्थं योजना प्रकृत्यैवाशुतरविनाशिनस्तस्य मिथ्याज्ञानस्य संस्काराद् वा ज्ञानान्तराद् वा योऽपायः, तस्य तत्त्वज्ञानसाधारण्येन तस्यापि तत्त्वज्ञानस्य बाध्यत्वप्रसङ्गात् ।।

429.9 उने ।। **विषयादारभ्य फलपर्यन्तमित्यर्थ** इति । विषयं प्रवृत्तिं फलं

78.7 चापहरतीति भावः । तथा च टीकायां **यस्मिन्नेव** हीत्यादिना विषयोपहारो दर्शितः । **प्रवृत्तिं विघटयदित्यनेन** प्रवृत्तेः । **फलमस्यापहरतीत्यनेन** तु फल-स्यापहारो दर्शितः ।

78.12 टीयाम् । **तत्त्वज्ञानत्वादित्यर्थ** इति । न समानधीविषयतामात्रेण विरोध इति साध्यम् ।।

430.2 उने । **ययोर्धर्मिणोरिति** । शुक्तिकारजतयोः । **यौ धर्माविति** । शुक्ति-
78.12 कात्वरजतत्वलक्षणौ, तयोरिति । **एकत्र समवाय** इति टीकाक्षरैर्योगः ।।

14 टीयाम् । **अनुपजातविरोधीति** । नोपजातो विरोधी यस्य तत्तथा । **तेनेति** । पूर्वोत्पन्नेन मिथ्याज्ञानेन । **पूर्वापेक्षमुत्तरमुपजायत** इति । पूर्वमुपजीव्योत्तर-मुपजायते इत्यर्थः । **तदिति** । उत्तरज्ञानम् । **पूर्वविरोध** इति । पूर्वेण
79.5 सह विरोधे सति । **उपजातविरोधित्वेति** । उपजातं विरोधि पूर्वं ज्ञानं यस्य
79.6 तत्तथा । **इति भवत्यर्थसहायमिति** । उत्तरं ज्ञानमर्थसहायं भवति । **तद-सहायं च मिथ्याज्ञानमिति** । सोऽर्थोऽसहायो यस्य मिथ्याज्ञानस्य तत्तथा ।
78.9 **अनेनेति** । **मिथ्याज्ञानस्येत्यादिना सहायीभवतीत्यन्तेन** ग्रन्थेन । **उपलक्षिते** इति । ज्ञापिते ।।

430.3 उने । **व्यतिरेकिलिङ्गमिति** । मिथ्याज्ञानं बाध्यम्, अनुपजातविरोधि-त्वात् । यत् पुनर्बाध्यं न भवति तदनुपजातविरोध्यपि न भवति, यथा सम्य-ग्ज्ञानम् । न च तथेदम् । तस्माद् बाध्यमित्येवं व्यतिरेकिलिङ्गतानुपजात-विरोधित्वस्य भावनीया ।।

79.19 टीयाम् । **तत्त्वे चेतसो धारणां दर्शयतीति** । **विषयं भावयतीत्यस्य** व्याख्यानपरेण **समाहित** इत्यनेन पदेन तत्त्वे चेतसो धारणां दर्शयतीत्यर्थः ।। **प्रत्याहारमिति** । दर्शयतीत्यनुषज्यते । **बुद्धिधारामिति** । दर्शयतीत्यत्राप्यनुबध्यते ।
79.4 **विपच्यमाने ध्याने** इति वार्त्तिकं व्याचष्टे । **विपच्यमानत्वं ध्यानस्य तत्त्वज्ञान-स्फुटाभत्वारम्भावस्थेत्यनेन** । **विविक्तायां ध्यानभावनायामिति** वार्त्तिकं विवृणोति **ध्यानेत्यादिना वासनाया** इत्यन्तेन ध्यानजनिता [ ६०६ ख ] भावना ध्यानभावना इति समासः । अथ भावनायाः पर्यायमाह—**संस्कार** इति । **विविक्तायामि-**त्युक्तम् । अथ कुतः सकाशादस्याविवेको भेदापरनामा इत्याह—**तस्या भावनाया विवेको भेदो मिथ्याज्ञानवासनायाः** सकाशात् ।

80.2 वार्त्तिके । **विरोधादित्युक्तमिति** । **समाने विषये तयोर्विरोधादित्यने-**नातिनिकटवर्तिनानन्तरवार्त्तिकेनोक्तो विरोध इत्यर्थः ।।

80.11 टीयाम् । **न च तस्मादेव रागादीनामभाव इतीति** । रागाभावो हि वैराग्यम् । ततश्च वैराग्याद् रागादीनामभाव इति कोऽर्थः ? रागाद्यभावाद् रागाद्यभाव इति ? न चैतद्युक्तम् । न हि भवति शब्दो नित्यो नित्यत्वादिति ।
80.5 वार्त्तिके । **भोगानभिष्वङ्गलक्षणमित्युक्तमिति** । भोगेष्वनासक्तिर्वैराग्यं तत्त्वे [illegible]दिभिरुक्तमित्यर्थः । अनासक्तिश्च विषयपरित्यागेच्छा, **वशितया च स्वय-**

80.14 **मुपनतेषु विषयेषु माध्यस्थ्यदर्शनमित्येवंरूपा** टीकाकृता व्याख्याता। इयं च न रागाद्यभावरूपा। ततो युक्त एवास्याः सकाशाद् रागादीनामभावः।

81.4 टीयाम्।। **कस्मात् पुनरुपचार** इति। केन प्रयोजनेनोपचार इत्यर्थः। वार्त्तिके। **तत्साधनाभावादिति**। तस्य जन्मनः साधनत्वाद् धर्माधर्मयोः।। टीयाम्।। **उपचारे प्रयोजनमिति**। जन्मसाधनत्वलक्षणम्।।

81.4 वाके।। **प्रवृत्तिसाधनत्वादिति**। प्रवृत्तिः साधनं ययोर्धर्माधर्मयोः तौ तथा तयोर्भावस्तत्त्वं तस्मात्।

**यावदस्ये**त्यादेर्वार्त्तिकस्य संवादिकां श्रुतिमाह टीकाकारः।

तावदेवास्य चिरं यावन्न विमोक्ष्योऽथ संपत्स्यत इति। व्याख्यातेयं प्राक्।

82.2 **तदेतच्चेति योजनेति**। एतच्च तदिति यद् वार्त्तिकं तदेतच्चेत्येवं व्यत्ययेन द्रष्टव्यमित्यर्थः। **कर्माविद्यावासनयोरिति**। कर्मवासना धर्माधर्मलक्षणा।

82.1 अविद्यावासना तु विपर्ययजन्यः संस्कारः, तयोः। तत्स्वरूपमाहेति। अविना-

83.3,5 भावस्वरूपम्। **तत्सिद्धये** इति। संबन्धसिद्धये। **तयोरिति** सुखदुःखयोः।।

।। इति द्वितीयसूत्रावचूर्णिः।।

431 उने। **स्वाभाविकं त्विति**। यदेतत् शास्त्रप्रवृत्तेस्त्रैविध्यम्, तत् पुरुषकल्पनामात्रप्रभवं वा, शास्त्रस्वभावोत्थं वा? तत्राद्यो विकल्पष्टीकाकृता निरस्तः। द्वितीयस्तु उदयनेन स्वाभाविकं त्वित्यादिना निराकृतः। **तस्येति**। शास्त्रस्य। **अवान्तरप्रयोजनस्येति**। तत्त्वज्ञानलक्षणस्य। परं प्रयोजनं तु निःश्रेयसम्। तत्तु तत्त्वज्ञानाद् भवति साक्षात्। न तु त्रिविधायाः शास्त्रप्रवृत्तेः।.

84.6 टीयाम्।। **अस्येति**। व्यतिरेकिहेतुस्वभावस्य लक्षणस्य। **प्रतिलक्षण-**

84.7 **मिति**। प्रतिलक्षणसूत्रम्। **शास्त्राभिसंबन्धपरादपि वाक्यादिति**। प्रथमसूत्रलक्षणात्। प्रथमसूत्रं हि मुख्यतः शास्त्राभिसंबन्धलक्षणपरं सदुद्देशमपि करोतीत्यर्थः।

वाके। **लक्षणयुक्तमिति**। घ्राणरसनचक्षुस्त्वक्श्रोत्राणिन्द्रियाणि भूतेभ्यः [१.१.१२] इति सूत्रं लक्षणं वक्ति पञ्चानामपीन्द्रियाणाम्, अथ च नामधेयेनोद्देशमात्रम्। **कारकशब्दत्वादिति**। जिघ्रत्यनेनेत्यादि व्युत्पत्तिबलात् कारकशब्दा एते घ्रा[६०७क]णादयो न तु प्रातिपदिकार्थमात्रवाचिनः। उद्देशस्तु प्रातिपदिकार्थमात्रवाचिनामधेयकीर्तनस्वरूपः।। अतो न घ्राणादि [१.१.१२] सूत्रे उद्देशस्यावकाशः। ननु घ्राणादीनामुद्देशस्तर्हि कुत्र बोद्धव्यः? उच्यते— प्रथमसूत्रे प्रमेयशब्देनोद्देशस्तेषां मन्तव्यः।

टीयाम्। **उद्देशसमये** इति। प्रथमसूत्रकाले। **तदर्थानामिति**। प्रमाणादिशब्दार्थानाम्। **उपग्राहकमिति**। संग्राहकम्।

भाष्ये । **उद्दिष्टस्य विभक्तस्य वा लक्षणमुच्यते, यथा प्रमाणानां प्रमेयस्य चेति** । प्रथमसूत्रे उद्दिष्टानि प्रमाणानि । तदनु तृतीयसूत्रेण विभक्तानि । पश्चाल्लक्षणसूत्रैर्लक्षयिष्यन्ते । प्रमेयमपि प्रथमसूत्रे उद्दिष्टम्, आत्मशरीरेत्यादौ सूत्रे तस्य विभागः । तदनु लक्षणं भविष्यति । **उद्दिष्टेत्यादि** । छलं हि प्रथमसूत्रे उद्दिष्टम् । वचनविघातोऽर्थविकल्पोपपत्त्या छलम् [ १.२.१० ] इत्यनेन लक्षितम् । तत् त्रिविधम् [ १.२.११ ] इत्यनेन विभक्तम् ।

टीयाम् ।। **विभक्तस्य लक्षणमुच्यते इत्युक्तमिति** । **तत्रोद्दिष्टस्य विभक्तस्य वा लक्षणमुच्यते** इति भाष्ये उक्तमित्यर्थः । कोऽभिप्रायः ? मुख्यवृत्त्यानेन सूत्रेण विभाग उच्यते, सामान्यलक्षणं तु गौण्या वृत्त्या इति कृत्वा उद्दिष्टस्य सामान्यतो लक्षितस्य विभक्तस्य च लक्षणमुच्यते इति नोक्तं भाष्यकृता । अपितु उद्दिष्टस्य विभक्तस्य वा लक्षणमुच्यते इत्येतावदेवोक्तम् ।

ननु यदि सामान्यलक्षणमनेनैव सूत्रेण गौण्या वृत्त्या अभिहितम्, तर्हि किमित्यलक्षणं यदुद्दिष्टस्य विभक्तस्य लक्षणमुच्यते इत्यनेन भाष्येणोपन्यस्तमित्याशङ्क्याह—**तच्चेह विशेषलक्षणमित्यादि** । इन्द्रियार्थसन्निकर्षादिकं विशेषलक्षणं तु विभागसूत्रेणैवोक्तमिति भावः ।।

वार्के । **लक्षितस्य छलादेरिति** । वचनविघातोऽर्थविकल्पोपपत्त्या छलम् [१.२.१०] इत्येवंस्वरूपसामान्यलक्षण लक्षितस्य छलस्य विभागः कृतः । तत् त्रिविधम् [ १.२.११ ] इति । **अलक्षितस्य प्रमाणादेरिति** । विशेषलक्षणेनालक्षितस्येत्यर्थः ।।

टीयाम् ।। **लक्षणलक्षणमात्रविवक्षया लक्षितस्यालक्षितस्येत्युक्तमिति** । अयमत्राभिप्रायः । सामान्यविशेषस्वरूपं लक्षणमलक्षणं वा विवक्षित्वैव लक्षितस्यालक्षितस्य चेत्युक्तं वार्त्तिके इत्यर्थः । नो चेत्, सामान्यलक्षणापेक्षया सर्वत्र विभागो लक्षितस्यैव भवति । विशेषलक्षणापेक्षया तु अलक्षितस्यैव बिभागः सर्वत्र । **तच्चेति** । लक्षणमलक्षणं च । **छलसामान्यत** इति । छललक्षणं सामान्यत इत्यर्थः । **प्रमाणेषु प्रमेयेषु च विशेषत** इति । प्रमाणेषु प्रमेयेषु च अलक्षणं विशेषतः । **अत्रेति** । उद्दिष्टस्य विभाग इत्यस्मिन्नर्थे । **स्वरूपत** इति । स्वातन्त्र्येण । **अव्याख्याने हेतुमाहेति** । वार्त्तिककृता हि सूत्रार्थो न व्याख्यात इत्यव्याख्याने स एव हेतुं ब्रूते ।।

वार्के । **उद्दिष्टस्य विभागश्चेति** । उद्दिष्टानां प्रथमसूत्रेण प्रमाणानां यो विभागस्तृतीयसूत्रेण ।।

432 उने । **अर्थविपर्ययकीर्तने व्याघातादिति प्रत्यक्षप्रमाणानुवाद** इति । उद्दिष्टस्य विभागानर्थक्य[६०७ख]मित्यनेन वार्त्तिकेन त्रिविधा चास्य शास्त्रस्य

प्रवृत्तिरिति भाष्यार्थस्य विपर्ययकीर्तनं कृतम् । तस्मिन् साध्ये यो हेतुरुक्तो **व्याघातादित्यनेन** वार्त्तिकेन स न हेतुः, अपि तु प्रत्यक्षप्रमाणानुवादः । शास्त्रप्रवृत्तेस्त्रैविध्यग्राहकं यत् प्रत्यक्षप्रमाणं तस्यानुवाद इत्यर्थः । यदि तु **व्याघातादिति** हेतुः स्यात्, तदा यदेवार्थविपर्ययकीर्तनं स एव व्याघात इति साध्याविशिष्टत्वं हेतोर्दोषः स्यात् । प्रत्यक्षप्रमाणानुवादे तु नायं दोषः । अतएवाह— **अतो न साध्याविशिष्टत्वमिति** । व्यक्तम् । **व्यधिकरणत्वं वेति** । यदि नाम त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरित्यस्य व्याघातः, किमायातमुद्दिष्टविभागस्येत्येवंरूपं व्यधिकरणत्वं वा नेति योगः ।।

टीयाम् ।। **विभागवचनं विशेषेणोद्देश** इति । विभागवचनमित्यस्य पर्यायो विशेषेणोद्देश इत्ययम् ।।

वाके ।। **अन्यार्थत्वादिति** । समानासमानजातीयव्यवच्छेदार्थत्वादित्यर्थः । **अन्यासंभवस्य च ततोऽनधिगतेरिति** । अस्य व्याख्यानमाह—**न च लक्षणतोऽन्यासंभवो गम्यते** इति । व्यक्तम् । **अतश्चतुर्णामनभिधान** इति । अनेन विभागसूत्रेण चतुर्णामनभिधाने सति, विभागसूत्राकरणे इत्यर्थः । **चतुर्णां च लक्षणोपदेशे** इति । लक्षणसूत्रैश्चतुर्णां लक्षणाभिधाने इत्यर्थः ।

विभागप्रयोजनप्रतिपादनपरवार्त्तिकटीकायाः समुदायार्थव्याख्यानमाह उदयनः

432 **अविद्यमाने** इत्यादिना **तदपनोदाय विभागवचनमित्यनेन** ग्रन्थेन । **समानधर्मदर्शनादिति** । विद्यमानाविद्यमानयोर्धर्मिणोर्लक्षणाभावः समानो धर्मः,

433 तस्य दर्शनात् प्रमाणचतुष्टयव्यतिरिक्तेषु परोपगतेषु प्रमाणधर्मिषु । **असदनुपयोगिसंशयानुच्छेदे** इति । किमसत्त्वात् नोक्तानि शेषप्रमाणानि, आहो अनुपयोगित्वादित्येवमसदनुपयोगिविषयस्य संशयस्यानुच्छेदे सति । **तत्रैवेति** । चतुर्षु । **विनैव प्रमाणानामाधिक्यादिति** प्रमाणषट्काधिकं हि प्रमाणं प्रायेण केनापि नाभ्युपगतम् इति बौद्धापेक्षय मीमांसकानामधिकप्रमाणलक्षणाभिधानं विनैव प्रमाणानामाधिक्यादिति सिद्धम् । **तदपेक्षयैवेति** । बौद्धापेक्षया । **सत्याधिक्ये** इति । सांख्येन हि बौद्धापेक्षया अधिकप्रमाणलक्षणप्रणयनमकारि नैयायिकाद्यभ्युपगतप्रमाणाधिक्ये सतीत्यर्थः । **इहापि** । न्यायशास्त्रे ।

ननु विभागप्रयोजनप्रतिपादनपरवार्त्तिकटीकायाः समुदायार्थ एव व्याख्यात उदयनेन, तत् कथमत्र पूर्वापरग्रन्थसंगतिर्विधेयेत्याशङ्क्याह—**पूर्वापरग्रन्थसंगतिरत्र** स्फुटेत्येतदपि मन्तव्यमितीति ।। न केवलं समुदायार्थो मन्तव्य इत्यपिशब्दार्थः ।।

टीयाम् । **ईदृश** इति । अक्षमक्षं प्रति वर्तत इत्येवंरूपोऽव्ययीभावानुकुलः । **अर्थमात्रमनेन प्रतिपाद्यते** इति । अक्षस्याक्षस्य प्रति विषयं वृत्तिः प्रत्यक्षमित्यनेन विग्रहेण भाष्यकृता अर्थमात्रमेव प्रतिपाद्यते । समासस्य तु

कस्याप्यनुकू[ ६०८ क ]लो नैष विग्रहः । **समास एवेति** । अव्ययीभावः । **अक्षस्येति षष्ठी न श्रूयेतेति** । अक्षस्याक्षस्य प्रतिविषयं वृत्तिरिति भाष्ये षष्ठी न श्रूयेत । अपि त्वक्षमक्षं प्रति वर्तत इति श्रूयेत । **अन्यत्रेति** । सूत्रादन्यत्र प्रत्यक्षोऽर्थ इत्यादौ । **अनागतोपादानविशिष्टं सलिलमिति** । अनागतं प्रवृत्त्युत्तरकालभावि यदुपादानं ग्रहणं तेन विशिष्टम् । **तन्मात्रमिति** । साक्षात्कारमात्रम् । **अस्येति** । ज्ञानस्य । **साक्षात्कारवल्लिङ्ग इति** । साक्षात्कारवत् सत् । क्व ? लिङ्गे । **विनश्यदवस्थव्याप्तिस्मरणसहकारीति** । प्रथमान्तं पदम् । **तदुद्बोधितसंस्कारेणेति** । तेनालोचनेन विकल्पेन वा उद्बोधितो यः संस्कारः स एव द्वारमुपायस्तेन ।

437 उने । **असत्प्रतिपक्षेभ्य इति** । अविद्यमानमन्त्रादिप्रतिपक्षेभ्यः । ननु
438 कथं प्रतिपक्षता मन्त्रादीनां सिद्धेत्याह—**प्रतिपक्षता च मन्त्रादीनां सहकारिविरहरूपत्वादिति** । अग्नेर्हि दाहं कुर्वतः सहकारी मन्त्राद्यभावः । तस्य सहकारिणोऽभावो रूपं येषां मन्त्रादीनां ते तथा तद्भावस्तत्त्वं तस्मात् । **तद्विरहस्येति** । मन्त्राद्यभावस्य । **व्यतिरेकमुखेनेति** । मन्त्राद्यभावाभावे हि दाहलक्षणकार्यस्य यो व्यतिरेकोऽभावः स एव मुखमुपायस्तेन । **स्वरूपतश्चेति** ।
441 वह्निस्वरूपस्यैव ये प्रतिकूलास्ते स्वरूपतः प्रतिकूलाः । **सहकारितश्चेति** । ये तु सहकारिणं मन्त्राद्यभावादीनां प्रतिकूलास्ते सहकारिणः । **तदन्वये कार्यव्यतिरेकगम्यमिति** । मन्त्रादिप्रयोक्तॄणां सद्भावे दाहादिकार्याभावगम्यम् । **तच्च विपर्ययानुकूलत्वे पर्यवस्यतीति** । प्रतिकूलत्वं कार्यविपर्यये निष्ठां यातीत्यर्थः । **व्यभिचारगम्यमिति** । तदभावेऽपि भावः, तद्भावेऽपि चाभावो व्यभिचारस्तेन गम्यम् । **विमर्शसंभार इति** । मन्त्रेण हि वह्नेः किं स्वरूपं प्रतिबध्यते, सामर्थ्यं वा ? न तावत् स्वरूपम्, तदवस्थस्यैव तस्य प्रत्यभिज्ञायमानत्वात् । नापि सामर्थ्यमनभ्युपगमादित्यादिविकल्पसमूहः । **अतीन्द्रियसामर्थ्येऽपि समान इति** । मन्त्रेण हि अतीद्रियसामर्थ्यस्य स्वरूपं न हन्तुं शक्यते मन्त्रापगमे कार्यदर्शनात् । अथ सामर्थ्यस्य यत्सामर्थ्यं तद्विनाश्यते तदसत्सामर्थ्ये सामर्थ्यानभ्युपगमात्, अन्यथा अनवस्था प्रसज्यते इत्यादेर्विमर्शसंभारोऽतीन्द्रियसामर्थ्येऽपि कर्तुं शक्यत इति भावः । **अन्यदेवेति** । अनुमानम् ॥

टीयाम् ॥ **हेतुतामिति** । जलादीनां पिपासाशमनकारणानाम् । **नापि**
88.12 **सहकारिसाकल्यानुमानमाचक्ष्महे इति** । सहकारिसाकल्यं यत्कार्यसमुत्पादैकव्यञ्जनीयं तत् पिपासाशमनहेतुभावानुमानविषयतया नाचक्ष्महे इत्यर्थः । **किं तु स्वरूपस्य कार्यसंबन्धितामिति** । कारणस्वरूपस्य कार्यसंबन्धिता पिपासाशमनशक्तिरित्याचक्ष्महे इत्यर्थः ॥

442 उने ॥ **अन्यकार्येणेति** । अन्यस्य जलव्यतिरिक्तस्य वह्न्यादेर्यत् कार्यं तेन । **तत्कार्येणैव वेति** । तस्य जलस्य यत् का[ ६०८ ख ]र्यं तेनैव वा ।

**अहेतुरेव हेतुः स्यादिति।** पिपासाशमने यो न हेतुः पावकादिः, असावपि हेतुः स्यादित्यर्थः। **तस्येति।** जलस्य। **तत्कारणत्वे** इति। तस्य पिपासाशमनकारणत्वे। **तत्कार्यत्वमिति।** तस्य पिपासाशमनस्य जलकार्यत्वम्। अयमस्याः सर्वस्या अप्याशङ्काया भावः। यदिदं जलस्य पुरतः परिस्फुरतः कार्योपलक्षितं रूपमनुमानस्य विषयः स्वीक्रियते यत् जलजातीयं तत् पिपासाशमने शक्तं यथा प्राक्प्रतिपन्नं जलम्। तथा चेदं जलजातीयम्। तस्मात् पिपासाशमने शक्तं यथा प्राक्प्रतिपन्नं जलम्। तथा चेदं जलजातीयम्। तस्मात् पिपासाशमने शक्तमित्युल्लेखेन तत्र यदिदं कार्योपलक्षितत्वं स्वरूपस्य, तत् किं परकार्योपलक्षितत्वम्, स्वकार्योपलक्षितत्वं वा? आद्ये पक्षे तावदहेतुर्हेतुः स्यादित्युत्तरम्। द्वितीये त्वितरेतराश्रयत्वम्। सिद्धे हि पुरस्फुरतो नीरस्य कारणत्वे पिपासाशमनस्य कार्यत्वं सिद्धेत्। सिद्धे च पिपासाशमनस्य कार्यत्वे जलस्य पिपासाशमनं प्रति कारणत्वं सिद्धेदिति॥

443　**कासाञ्चिद् विनाशदर्शनादिति।** या जलव्यक्तिः सर्वा पिपासा शमनहेतुर्यथा संप्रतिपन्ना जलव्यक्तिश्चेयमित्येवं प्रतिव्यक्ति कारणत्वानुमानमनुचितं कासाञ्चित् जलव्यक्तीनामकृतोदन्योपशमानामपि विनाशावलोकनात्। **इहेति।** पुरो दृश्यमाने जलजातीये। इदमुक्तं भवति। प्रागेव जलजातीयस्य यदवधृतं कारणत्वं तत् पुरोवर्तिनि नीरे स्मर्यत एवेदानीं न त्वनुमीयते। अतः कथमनुमानस्य कार्योपलक्षितं स्वरूपं विषयः॥

88　टीयाम्। **तथा भावदर्शनेऽपीति।** कार्योपहितस्वरूपपरिच्छेदे। **तत्रेति।** दृश्यमानतोये। **पाटलिपुत्रे स्मरन्त्यभ्रान्ता** इति। पाटलिपुत्र संबन्धितया स्मरन्तीत्यर्थः।

444　उने॥ **सति सहकारिसाकल्ये कुर्यादिति साध्यत्वादिति।** पिपासाशमने शक्तं जलमिति कोऽर्थः? सहकारिसाकल्ये सति पिपासाशमनं कुर्यादित्यर्थः। **तस्य चेति।** साध्यस्य। **सहकार्यसाकल्यप्रयुक्तकार्याभावत्वरूपस्य तत्रापि भावादिति।** सहकारिणामसाकल्येन प्रयुक्तं यत् कार्याभाववत्वं तद्रूपं यस्य साध्यस्य तत् तथा तस्य तत्रापि कार्यमकृत्वैव विनष्टेषु व्यक्तिभेदेषु भावात्। अयमाशयः। सहकारिसाकल्ये कुर्यादित्यस्य हि परमार्थोऽयं यदुत सहकार्यसाकल्ये कार्यं न कुर्यादेव। ततश्च याः कार्यमकृत्वा व्यक्तयो विनष्टाः तास्वपि सहकार्यसाकल्यप्रयुक्तकार्यभाववत्वलक्षणं साध्यं विद्यत एवेति कस्ताभिर्व्यभिचारः? यदेव सहकारिसाकल्ये कुर्यादित्यस्याभिधेयम्, तदेव हि सहकार्यसाकल्ये न कुर्यादित्यस्यापि परमार्थतोऽभिधेयम्। यदेव च सहकार्यसाकल्ये न कुर्यादित्यस्याभिधेयम्, तदेद सहकारिसाकल्ये कुर्यादित्यस्यापि यतः। **अतद्धेतुश्चेति।** तयोः सुखदुःखयोर्हेतुस्तद्धेतुर्न तद्धेतुरतद्धेतुः।

**प्रसङ्गाल्लक्षणमप्यभिहि[६०९ क]तमिति** । मितेन लिङ्गेन लिङ्गिनोऽर्थस्य पश्चा[न्मानम]नुमानमित्यनेन हि भाष्येण मुख्यवृत्त्या अनुमानशब्दव्युत्पत्ति-रभिहिता, प्रसङ्गतस्तु लक्षणमप्यभिहितमिति भावः। **स्मृत्यादिव्यवच्छेद्यं**
445 **दर्शयतीति** । व्यवच्छेद्यं कीदृगित्याह—**स्मृत्यादि** । **फलान्तरसंभवेऽपीति** । वह्न्यनुमितेः फलान्तरमुपादानादिबुद्धिः, तस्य संभवेऽपि । **एतस्येति** । मितेन लिङ्गेन लिङ्गिनोऽर्थस्य पश्चान्मानमनुमानमिति । शब्दवाच्यस्य ज्ञानात्म-कस्यानुमानस्य । **सुप्रसिद्धमनुमानमिति** । प्रत्यक्षफलस्वभावो लिङ्गपरामर्श एव हि तथा चायं धुमवानित्युल्लेखवान् सुप्रसिद्धमनुमानम् । **अनेन लक्षणेनेति** । मितेन लिङ्गेनेत्यादि भाष्योक्तेन । **उभयसमाधानसङ्गतिरिति** । उभयं च तत्समाधानं च, तस्य संगतिर्घटना । तत्र नैष दोष इत्यादिना वार्त्तिकेण ब्रूम इत्येतदन्तेन प्रथमसमाधानमुक्तम् । अत्र च यतःशब्दाध्याहारेण लिङ्गपरामर्शो-ऽनुमानत्वेन संगृहीतः । द्वितीयं तु समाधानं भवतु वेत्यादिना फलत्वादित्यन्तेन वार्त्तिकेणोक्तम् । अनेन च सफलत्वमनुमानस्योक्तम् । **समाधानानन्तरमाहेति कस्मिन्नाक्षेपे** इति । कस्मिन्नाक्षेपे समाधानान्तरमाहेत्येवं योगः ॥

89.9　टीयाम् । **अथ कस्माद्धानादिविषयं प्रामाण्यमुच्यते, न तु स्वगोचरं प्रतीति** । वह्न्यादिज्ञानं वह्न्यादौ प्रमा वह्न्यादेस्तु हानादौ प्रमाणमिति कस्मादुच्यते इत्यर्थः ॥

445.8　उने । **स्वगोचरं प्रत्येवोक्तं भवतीति** । यत्र हि यो व्याप्रियते स तस्य विषयः । वह्निज्ञानं च हानादावेव व्याप्रियत इति हानादिरेवास्य स्वकीयो गोचरः । तथा च स्वगोचरं प्रत्येवास्य प्रामाण्यम् । एवं चाशङ्कैवेयमनुपपन्ना टीकाकृतोद्भाविता अथ कस्माद्धानादिविषयं प्रामाण्यमुच्यते न तु स्वगोचरं प्रतीत्येवंरूपा । ततश्च समाधानवार्त्तिकमपि सर्वं च प्रमाणमित्यादिकमनुपपन्न-मित्याशङ्क्य व्यापारप्रतिपत्त्यनुबन्धयोर्विभिन्नविषयत्वाभिप्राये एते शङ्कासमाधाने इत्यभिप्रायवान् टीकाकार आह—**यद्यपीत्यादिकम्** ।

टीयाम् । **प्रमाणफलयोरिति** । वह्निज्ञानं प्रमाणम् । वह्नेरेव हेयत्व-ज्ञानं फलम् । तयोः ॥

445　उने ।। **येन विज्ञानं निरूप्यत** इति । वह्निज्ञानमित्येवंरूपं नाम यद्व-
446 शाल्लभते इत्यर्थः । **न च स्वविषयादन्यद् विषयान्तरमस्य संभवति, अतिप्रसङ्गा-दिति भावः पूर्वपक्षिण इति शेष** इति । टीकायां न चेत्यादिकं यद् वाक्यं तस्याग्रतः पूर्वपक्षिण इत्यध्याहर्तव्यमिति भावः । **द्वितीयानुमानस्येति** । प्रथमं ह्यनुमानं तथा चायं धूमवानित्येवंरूपम् । तस्य च फलं पावकप्रतिपत्तिः । द्वितीयं त्वनुमानं पावकप्रतिपत्तिरेव । उपादानादिबुद्धिश्च तस्य फलम् । **न तु द्वितीयप्रत्यक्षस्येति** । प्रथमं हि प्रत्यक्षमिन्द्रियार्थसन्निकर्षः । तस्य च फलं

घटाद्यवबोधः । द्वितीयं तु प्रत्यक्षं घटाद्यवबोध एव । तस्य च फलं हानादिबुद्धयः किमिति न भवन्ति ?

टीयाम् । **परोक्षार्थावगाहितयेति** । हे[६०६ ख]यादिबुद्धीनां ह्यनागते हानादिविशिष्टं वस्तु विषय इति परोक्षार्थावगाहिता । **इति नियमवादिनामिति** । परोक्षार्थावगाहितया हेयादिबुद्धयः प्रत्यक्षफलं न भवन्ति, भवन्ति त्वनुमानस्येत्येवंरूपनियमवादिनाम् । अयं चैवंवादित्वे नियमोऽभिप्रेतो यदुत सन्निकर्ष एव प्रत्यक्षं प्रमाणम्, न तु तज्ज्ञानमपि ।

**इति मन्वान आक्षिपतीति** । यथा मितेन लिङ्गेन लिङ्गिनोऽर्थस्य पश्चान्मानमनुमानमित्यत्रानुमानशब्दः फले निरुक्तः, तथा उपमानं सामीप्यमानमित्यत्रापि उपमितिरुपमानं सामीप्यस्य सादृश्यस्य मानं परिच्छेद इत्येवं फले निरुक्त उपमानशब्द इति भ्रान्त्या व्याघातं वदति परः । तथा हि संज्ञासंज्ञिसंबन्धप्रतिपत्तिरुपमानफलमिति वक्ष्यति । अत्र तु सादृश्यपरिच्छेद उपमितिरित्युक्तमिति व्याघातः । अस्य च व्याघातस्यायं परिहारः । उपमानशब्दोऽयं करणसाधनः । ततश्चायमर्थो **भाष्याक्षराणाम्** । सामीप्यस्य सादृश्यस्य यत् मानं मितिः, तत् संज्ञासंज्ञिसंबन्धिपरिच्छेदे कर्तव्ये उपमानं प्रमाणं भवतीति ॥

वाके । **सामीप्यमानेन समाख्यासंबन्धप्रतिपत्तेरिष्टत्वादिति** । सादृश्यपरिच्छेदेन करणेन कृत्वा संज्ञासंज्ञिसंबन्धप्रतिपत्तेरिष्टत्वात् । **उपयुक्तोपमान**
90 इति । श्रुतातिदेशवाक्य इत्यर्थः । **गोदर्शी** इति । पूर्वमुपलब्धवलीवर्दः । **प्रत्यक्षाद् गवा सारूप्यं प्रतिपद्येति** । अनेन सामीप्यमानमुक्तम् । एतदेव चोपमानप्रमाणमुच्यते । अथास्य फलमुपदर्शयति—**अस्य गवयशब्दः संज्ञेति संज्ञासंज्ञिसंबन्धं प्रतिपद्यते** इति । व्यक्तम् ।

उने । **स्वरूपत** इति । शब्दप्रतिपत्तित्वमात्रेणैव तत् प्रमाणमित्यर्थः । मा भूत् स्वरूपतः शब्दप्रतिपत्तिः प्रमाणम्, वाक्यार्थानुभवलक्षणफलजनकत्वात् तु प्रमाणं भविष्यतीत्याशङ्क्याह—**नापीत्यादि** । **तदानीमिति** । वाक्यार्थप्रतिपत्तिकाले । तस्या इति शब्दप्रतिपत्तेः । ननु यद्यपि अनुभूतिस्वभावा वाक्यरूपशब्दप्रतिपत्तिर्वाक्यार्थप्रतिपत्तिकाले विनष्टा, तथापि स्मृतिरूपाया वाक्यरूपशब्दप्रतिपत्तेर्वाक्यार्थप्रतिपत्तिः फलं भविष्यतीत्याशङ्क्याह—**न च स्मृतीत्यादि** । **तत्फलत्वमिति** । सा वाक्यार्थप्रतिपत्तिः फलं यस्याः स्मृतिरूपायाः प्रतिपत्तेः सा तथा तद्भावस्तत्त्वम् । **अनुपयुक्तसमयानामिति** । अगृहीतसङ्केतानां प्रमातॄणाम् । **अस्मर्यमाणपदार्थानामिति** । न स्मर्यमाणाः पदार्था यैः प्रमातृभिः ते तथा तेषाम् । **शब्दस्मरणेऽपीति** । वाक्यरूपशब्दस्मरणेऽपि । **तदभावादिति** । वाक्यार्थप्रतिपत्तेरभावात् ।

टीयाम् । **वाक्यमिदमित्यनुसन्धानात्मकमिति** । चैत्र गां बधानेत्येतद्वाक्यं प्रवर्तते इत्येवमनुसन्धानात्मकम् । **पदार्थस्मरणसहकारीति** । पदार्थानां स्मरणानि

सहकारीणि यस्य तत् तथा। अनेन टीकावचसा **अस्मर्यमाणपदार्थानामिति** यदुदयनेन पातनायामाशङ्कितम्, तत् परिहृतम्। **एतदिति**। वाक्यमिदमित्यनुसन्धा[६१० क]नात्मकं स्मार्तं विज्ञानम्।

**प्रत्यक्षपरा** इति। प्रत्यक्षनिष्ठाः। कोऽभिप्रायः? इतरप्रमाणजन्यायां प्रमायामुत्पन्नायामप्याकाङ्क्षा न निवर्तते। प्रत्यक्षप्रमाणजन्या तु प्रमा अर्थसाक्षात्कारस्वरूपा यदोत्पन्ना, तदा सर्वथा आकाङ्क्षा निवर्तते प्रमातुरिति। प्रत्यक्षपराः प्रमाणान्तरजन्याः प्रमितय इति सिद्धम्॥

ननु तदनन्तरमनुमानं तत्पूर्वकत्वादिति यदुक्तं वार्त्तिके तदसंबद्धम्, यतोऽनुमानादिपूर्वकमप्यनुमानमस्तीत्याशङ्क्याह—**यद्यपीत्यादि**। **शब्दपूर्वकमिति**। यथा यथा गौस्तथा गवय इत्यतिदेशवाक्यपूर्वकम्।

447 उने। **शेषाभिधाने** इति। शेषवदभिधानं च भणनं शेषाभिधानं तस्मिन्। त्रयाणामनन्तरं भणने इत्यर्थः। **न्यायसिद्धेऽपीति**। यदा हि त्रीणि प्रत्यक्षादीनि युक्त्या क्रमेण व्यवस्थापितानि तदा प्रयोजनाभिधानमन्तरेणैव पर्यन्तेऽभिधानं शब्दस्य सिद्धमिति भावः। **तदकौशलख्यापनायेति**। तस्यैकदेशिनोऽपाण्डित्यख्यापनाय। **दूषणाभासेनेति**। द्वितीयैकदेशिप्रोक्तदूषणेन। **इति शिक्षयितुमिति**। शिष्यानित्यध्याहारः। वार्त्तिककृत**मनुरञ्जयन्निवेति**। वार्त्तिककारे अनुरागं कुर्वाण इव॥

टीयाम्। **अक्लिष्ट** इति। शास्त्रश्रवणेनाखेडितः। प्रथममेव शृण्वन्निति यावत्। **अनन्तरं मतमिति**। प्रथमैकदेशिमतदूषणपरं क्रमवर्णवृत्तित्वाद् वाचक इत्यादिकमनन्तरं मतम्। इह च प्रथमैकदेशिनामयमाशयो यदुत प्राधान्यादादौ प्रत्यक्षमुक्तम्। द्वितीयैकदेशिनां त्वभिसन्धिर्यदुत क्रमवर्णवृत्तित्वाद् वाचः किमवश्यं क्रमाभिधाने प्रयोजनमभिधातव्यम्? अभिधातव्यं चेत् तर्हि महाविषयत्वादादौ शब्दाभिधानं प्रसज्यत इति॥ आचार्यमतं त्विदम्। सर्वप्रमाणानां प्रत्यक्षपूर्वकत्वादौ प्रत्यक्षमुक्तम्, न तु प्राधान्यात्। शेषप्रमाणक्रमाभिधानं त्वाचार्यमते यथाम्नायं स्वयं बोद्धव्यम्। इति मतत्रयं मनसि व्यवस्थाप्य वार्त्तिकटीके गमनीये।

448 उने। **उक्तमुपपिपादयिषुरिति**। प्रत्यक्षं पूर्वं प्राधान्यादित्येक इत्यत्र टीकाशकले य एक उक्तः, स उक्तमुपपिपादयिषुर्ग्राह्यः। प्रथमैकदेशीत्यर्थः। **चोद्यचञ्चुरिति**। महाविषयत्वादादौ शब्दोपदेश इत्यत्र टीकाखण्डे योऽपर उक्तः

448 स चोद्यचञ्चुर्द्रष्टव्यो द्वितीयैकदेशीत्यर्थः। **अन्य एवेति**। प्रत्यक्षव्यतिरिक्तः। **विपक्षभूते प्रत्यक्षेऽपीति**। अनाद्यत्वं हि प्रत्यक्षस्य यदेष्टं तदा विपक्षतैवायाता प्रत्यक्षस्य। व्यतिरेकपक्षे च विरुद्धमिति द्रष्टव्यमिति। शब्द आदावुपदेष्टव्यो महाविषयत्वात्। यः पुनरादौ नोपदिश्यते स महाविषयोऽपि न भवति यथानु-

मानादिः । न च तथा शब्दः । तस्मादादावुपदेष्टव्यः । एवंरूपे व्यतिरेके महाविषयत्वं विरुद्धम् । अनाद्यत्वेन संमते प्रत्यक्षे विपक्षैकदेशे सद्भावात् । महाविषयत्वलक्षणसाधारणधर्मदर्शननिमित्तं सन्देहमाहेति टीकां [६१० ख] किञ्चिद्
449 व्याचष्टे **पूर्वमित्यादिना** सन्देह इत्येतदन्तेन ।।

टीयाम् ।। **व्यवस्थितविषयमिति** । देशकालस्वभावनियन्त्रितवस्तु विषयम् ।।

450 उने । **अतो न पुनरुक्तमिति** । नानुमानविषये प्रवर्तते इत्यनेन सह न चानुमानविषये सामान्यरूपे संबन्धिनि प्रत्यक्षं प्रवर्तते इत्येतन्न पुनरुक्तमित्यर्थः । **किमिति न व्याख्यातमिति शङ्कानिवृत्तिकारणमित्यर्थ** इति । किं पुनः प्रमाणानि प्रमेयमभिसंप्लवन्ते इत्यादिकं भाष्यं किमिति वार्त्तिककृता न व्याख्यातमित्येवंरूपायाः शङ्काया निवृत्तौ कारणम् । तच्च प्रमाणत इत्येतस्मिन् पदे वर्णितमित्येवंरूपेण वार्त्तिकेणोपवर्णितमित्यर्थः ।

टीयाम् ।। **प्रतीतिरूपं क्रमं चाहेति** । न केवलं प्रतीतिस्वरूपमाह—प्रतीतीनां संबन्धिनं क्रमं चाहेत्यर्थः ।। **संसर्गोपधानमिति** । वाच्यवाचकभावलक्षणः संसर्गः संबन्धः । उपधानमुपाधिर्यस्य वह्नेः स तथा तम् ।।

उने । **उपदेशप्रामाण्ये तद्द्वारा वह्नावप्युत्तरकालमिति मन्तव्यमिति** उपदेशप्रामाण्ये सन्दिग्धे न तथा तद्द्वारा उपदेशप्रामाण्यसन्देहद्वारेण वह्नावपि उत्तरकालमुपदेशप्रामाण्यसन्देहोत्तरकालं सन्दिग्धेन सता प्रमात्रा निश्चयाय प्रवर्तितव्यमेवेति मन्तव्यम् । **अनेन विरोध** इति । यदा हि वह्नि प्रत्याहित उत्पादितः प्रत्ययो निश्चयो यस्येति व्याख्यातं वार्त्तिकम्, तदा सन्दिग्धेन निश्चयाय प्रवर्तितव्यमेवेति टीका विरुध्यते । वह्नौ संजातनिश्चयस्य प्रमातुः सन्देहाभावात् । अयं च विरोधो नास्ति । यतो वचनश्रवणसमनन्तरं तेन निःसन्देहो वह्निः प्रतिपन्न एव शब्दस्य स्वाभिधेयप्रतिपादकत्वात् श्रोतुश्च पूर्वमपि गृहीतसङ्केतत्वात् । परं तदुत्तरकालं किमयमुपदेश आप्तेन सतोक्तः, तदितरेण वा सता । अनेन प्रतिपादकेनेत्येवमुपदेशाप्रामाण्यसन्देहद्वारा वह्नौ सन्देहः । **एकदेशोत्कीर्तनेनेति** । प्रमाणतोऽर्थप्रतिपत्तावित्यादिभाष्यव्याख्यानग्रन्थस्यैकदेशोऽभ्यर्हिततरमित्यनेन । एतदुत्कीर्तनेन च पूर्वोक्तं संप्लवोपपादनं सर्वं स्मारितम् ।

टीयाम् । **अङ्गत्वं व्यापकत्वमिति** । धूमाङ्गत्वेनेति **वार्त्तिकस्य** कोऽर्थः ? धूमव्यापकत्वेनेत्यर्थः । **व्याप्यमिति** । धूमः ।।

उने ।। **तदभाव** इति । साक्षात्कारणस्याभावः ।।

टीयाम् ।। **भेदाश्रय** इति । द्व्यादिभेदभिन्नानां गुणप्रधानभावो नैककालमित्यर्थः ।।

।। इति तृतीयसूत्रावचूर्णिः ।।

**अर्थाक्षिप्तेत्यादि**। अर्थाक्षिप्तं च तत्सामान्यलक्षणं चार्थाक्षिप्तसामान्यलक्षणम्। तच्च विभागोद्देशश्च हेतू येषां तानि तथा तेषां भावस्तत्त्वं तेन ।।

उने। **सा चेति**। जिज्ञासा। **तल्लक्षणाधीनमिति** सामान्यलक्षणाधीनम्। सामान्यलक्षणविभागोद्देशज्ञानविशेषलक्षणज्ञानयोर्गोचरौ सामान्यलक्षणविभागोद्देशविशेषलक्षणलक्षणौ। **अस्येति**। सूत्रस्य ।।

वाके। **सूत्रार्थ** इति। अत्रार्थशब्दः प्रयोजनवाची ।।

453 उने। **अतो नासाधारणत्वं लक्ष[६११क]णस्येति**। लक्षणं हि व्यतिरेकिहेतुस्वरूपम्। हेतुश्च विपक्षादिव सपक्षादपि यदि व्यावृत्तो भवति, तदा नूनमसाधारणः। न चेदं लक्षणं तथा भवति यतो नास्यानुमानादिकमपक्षो येन तस्माद् व्यावृत्तं सदसाधारणतां यायात्। किं तु साध्यधर्मस्य प्रत्यक्षत्वस्यानुमानादावभावादनुमानादिकमपि विजातीयम्। तस्माच्च व्यावृत्ति-

454 व्यतिरेकिहेतुस्वरूपस्य लक्षणस्य भूषणमेव। **विशेषकत्वं लक्षणधर्म** इति। लक्ष्यं हि सजातीयविजातीयेभ्यो लक्षणेनैव विशेष्यत इति विशेषकत्वं लक्षणस्यैव धर्मः। **तत्प्रयोजनमित्यसङ्गतमिति**। एतत्सूत्राभिधेयस्य लक्षणस्य धर्मो विशेषकत्वमित्यसावप्यभिधेय एव। न चाभिधेयमेव प्रयोजनं क्वचिद् भवति।

456 **कारकादिति**। लक्षणात्। **फलभूतामिति** न तु धर्मभूताम्। **सर्वे** इति। प्रतिपाद्याः प्रतिपादकाश्चेत्यर्थः। **सर्वत्रेति**। लक्षणेऽपि व्यामोहो येन तदपि लक्षणान्तरेण लक्ष्येतेत्यर्थः। **न च सर्वे व्यामोहहेतव** इति। लक्षणमपि न व्यामोहहेतुरित्यर्थः। **न च सर्वा प्रतिपत्तिरिति**। अविविक्तं प्रत्यक्षादिकं धर्मिमात्रमपि न प्रतिपद्यत इति नेत्यर्थः ।।

**अस्येति**। सूत्रस्य। **तत्परमिति**। लक्षणविधानपरम्। **तस्येति**। विधेयस्य। **तस्येति**। लक्षणस्य ।।

टीयाम्। **व्यवच्छिनत्तीति**। सन्निकर्षपदं कर्मतापन्नं व्यवच्छिनत्ति ।।

448 उने ।। **इन्द्रियसंयुक्तव्यवधायकसंयुक्तेषु चेति**। इन्द्रियसंयुक्तं च कुड्यादिकम्। तेन संयुक्तेषु कुटादिषु। कुड्यादिना व्यवहितेष्वित्यर्थः ।।

टीयाम्। **अनुत्पादकस्य सन्निकर्षस्य व्युदास** इति। इन्द्रियसंयुक्तव्यवधायकसंयुक्तेषु चेत्युदयनवाक्योपात्तस्य ।।

459 उने ।। **तद्विपरीतमिति**। सादृश्यविपरीतम्। **इहेति**। प्रस्तावे। **असन्निकृष्टस्यैवेति**। असंबद्धस्यैव सादृश्यस्य। **सन्निकृष्टाश्रयस्येति**। सन्निकृष्टः संबद्ध आश्रयो यस्य सादृश्यस्य तत् तथा तस्य। **संयुक्तसमवायाभ्युपगमव्याघात** इति। यथा सादृश्यस्य सन्निकृष्टाश्रिततया ग्रहणम्, एवं रूपादीनामपि भविष्यतीति वृथा संयुक्तसमवायाभ्युपगमः स्यादिति भावः। अनुभव-

460 व्याघातश्चेति द्वितीयमुत्तरं क्षिपन्नाह—**चतुर्थेत्यादि** । **तद्व्याघात** इति । अनुभवव्याघातः। **चतुर्थसन्निकर्षकार्यतयेति** । संयुक्तसमवेतसमवायैकायतया ।

टीयाम् ।। **चाक्षुषत्वाद्युपाधिनिबन्धन** इति । यच्चक्षुषैव गृह्यते तद् रूपम् । यद् घ्राणेनैव परिच्छिद्यते तद् गन्ध इति चाक्षुषादिरूपाधिरेव रूपमिति वा गन्ध इति वा व्यपदेशा अभेदे निबन्धनम्, न तु रूपत्वादिसामान्यमिति प्राभाकराः । **अननुसंहितोपाधेरिति** । अनवगतचाक्षुषत्वाद्युपाधेः । **उपहितप्रत्यययोगादिति** ।

460 उने । **तन्मूलस्येति** । उपहितप्रत्ययमूलस्य । **उपहितव्यपदेशस्येति** । उपाधिविशिष्टस्य व्यपदेश [६११ख] स्य रूपरूपमित्यादेः । **तदभावे** इति । उपहितप्रत्ययाभावे । **विशिष्टोपलब्धेरेव प्रमाणत्वे** इति । रूपत्वादिसामान्यविशेषविशिष्टरूपाद्युपलब्धेः । **विशेषव्यपदेशे** इति । रूपं रूपमित्वादौ विशिष्टे व्यपदेशे कर्तव्ये उपलब्धिः करणकार्या क्रिया च्छिदिक्रियावदित्युल्लेखेन अविशिष्टोपलब्धिमात्रोपनीतं यदविशिष्टमिन्द्रियमात्रं चक्षुरादिव्यपदेशरहितं तन्नोपाधिः । **स एवेति** । चाक्षुषत्वाद्युपाधिनिबन्धनत्वाभिमानः । **उदाहृत्य** ।
462 व्यक्तीकृत्य । **सोऽपीति** । चाक्षुषत्वादिरूपाधिः । **अभिमतलाभ** इति । यदा हि बह्वीषु नीलव्यक्तिषु नीलं नीलमिति बुद्धिव्यपदेशाभेदः, तदा न चाक्षुषत्वादिरूपाधिरनीलस्यापि चाक्षुषत्वात् तथा बहुषु मधुरव्यक्तिषु मधुरं मधुरमिति बुद्धिव्यपदेशाभेदे रसनाविषयत्वं नोपाधिः तिक्तस्यापि रसनाविषयत्वात् । ततश्च तत्र नीलत्वं मधुरत्वं च सामान्यविशेषोऽभ्युपगन्तव्यः । एवं चास्माकमभिमतस्य सामान्यविशेषस्य लाभः सिद्धिः संजाता । **शब्दत्वादिसिद्धौ च तात्पर्यमिति** । रूपत्वादिसामान्यसिद्धिद्वारेण शब्दत्वादिसामान्यं **प्राभाकरो**ऽङ्गी-
464 कारयितव्य इत्यर्थः । **उभयसंग्रहे** इति । संयुक्तविशेषणसमवेतविशेषणसंग्रहे । **चतुष्टयसंग्रह** इति । समवायः समवेतसमवायः संयुक्तसमवायः संयुक्तसमवेतसमवायः इति चतुष्टयम् । **शुद्धस्येति** । संयुक्तसमवेतलक्षणविशेषविकलस्य । **प्रत्यक्षानङ्गत्वेनेति** । प्रत्यक्षस्याकारणत्वेन । **शुद्धस्यापीति** । समवेतसमवायसंयुक्तसमवायसंयुक्तसमवेतसमवायलक्षणविशेषणविकलस्य ।।

टीयाम् । **द्वितीयबुद्धिव्यपदेशयोः पौनरुक्त्यादिति** । शुक्ल इति वा पट इति वोक्तिः संपूर्णार्थाभिधात्रीति कृत्वा अन्यतरा तयोः पौनरुक्त्यदोषदुष्टा स्यात् । अथ बुद्धेः कथं पौनरुक्त्यं तस्या अशब्दात्मकत्वादित्याशङ्क्याहोदयनः **बुद्धेरित्यादि** । व्यक्तम् ।।

टीयाम् । **तन्नान्तरीयकस्येति** । भेदनान्तरीयकस्य ।।

472 उने । **अधस्तादिति** । किं पुनरिदं सामानाधिकरण्यमित्यादि हि
473 प्रागुक्तम् । **भेदसंबन्धाभ्यां व्यावर्तमानेति** । दधिकुण्डयोर्भेदश्चास्ति संबन्ध-

श्चास्ति, न तु सामानाधिकरण्यमिति भेदसंबन्धाभ्यां व्यावृत्तिः सामानाधि-
473 करण्यप्रतिपत्तेः। **अभेदं वेति**। अभेदे सति संबन्धं यद् वक्ष्यति—अथाभिन्नं
474.6 च तत्संबन्धे चेति साध्यमित्यादि। **अभेदासंबन्धौ वेति**। अभेदश्चासंबन्ध-
473.6 श्चेत्यभेदासंबन्धौ। तत्राभेदासंबन्धौ यथा साधयति तथाह—**तथा हीत्यादिना**।
474.6 **अस्येति**। सामानाधिकरण्यस्य। **इति साध्यमिति**। सामानाधिकरण्या-
474.7 दित्यस्य हेतोरभिन्नं च तत्संबन्धि चेति साध्यमित्यर्थः। **यत इति**। अभिन्नं
च तत्संबन्धि चेत्येवंरूपात् सपक्षात्। **उभयव्यवच्छेदपर्यवसानस्येति**। अभेद-
संबन्धलक्षणेनोभयेन व्यवच्छेदो विशिष्टता पर्यवसानं निष्ठा यस्य [६१२क] साध्य-
धर्मिणस्तस्य मनोरथेनाप्यसिद्धेः। अभिन्नं च तत्संबन्धि चेत्येवंरूपं वस्तु
475 मनोरथानामप्यविषय इत्यैदम्पर्यम्। **प्रकारभेदमादायेति** प्रकारान्तरमादा-
योभयव्यवच्छेदपर्यवसानस्य साध्यसिद्धिर्भविष्यति। केनचित् प्रकारेणाभेदः
केनचिच्च संबन्धो भविष्यतीति भावः। **तस्येति**। प्रकारभेदस्य।

477 **उक्तप्रकारेण चेति**। द्रव्यत्वगुणत्वलक्षणेन। **विशेष्यस्येति**। द्रव्यस्य।
**विशेषणद्वारेति**। द्रव्यत्वगुणलक्षणविशेषणद्वारेण। **उभयशब्दबुद्धिविषय-
त्वादिति**। अत्रोभयं द्रव्यत्वगुणलक्षणम्। **असाविति**। विवेकप्रकाशः।
**स्फुटतर इत्यस्य** पर्यायमाह—**निर्लुठितगर्भतयेति**। विविक्ततयेत्यर्थः। अर्थ-
विशिष्टप्रतीतिदर्शनाद् विशेषणमनुमीयत एव, न तु विशिष्टप्रतीत्या तदनुभूयते
478 इत्याशङ्क्यानुभवं समर्थयते **न चेत्यादिना**।

479 **इहैवेति**। समवायेऽभावे च। **समानन्यायेन निवारयतीति**। यथा
विनैव संबन्धान्तरेण विशेषणभावो भवति, तथा विशेषणभावस्य प्रत्यक्षतापि
संबन्धान्तरमन्तरेणैवेति समानो न्यायः। अनेन समानन्यायेन तं वादिनं
निवारयति यः किं तु संबन्धान्तररहितो वियेषणभावः प्रत्यक्षाङ्गं न भवतीति
कदाचिद् ब्रूयात्॥

टीयाम्॥ तत् किमत्र संबन्धान्तरं कल्प्यतामिति वाक्यं सूरेः॥

उने॥ **तद्विशिष्टप्रतिपत्तिरिति**। समवायेन विशिष्टस्य प्रतिपत्तिः।
**तस्या एवेति**। तस्या विशिष्ठप्रतिपत्तेः संबन्धी साक्षात्कार ऐन्द्रियकत्वनान्त-
रीयको विनैव संबन्धान्तरेण प्रतीयते। तद्विशिष्टप्रतिपत्तेः प्रत्यक्षप्रमितिस्व-
रूपता विनैव संबन्धान्तरेण प्रतीयत इति भावः। **अनवस्थाप्रसङ्गलक्षणस्तर्कः
समान** इति। यदि हि समवायोऽन्यसमवायबलात् समवैति, सोऽप्यन्यसमवाय-
बलात् असावपि समवायान्तरबलादित योऽनवस्थाप्रसङ्गः, स समवायो यदि
समवायान्तरबलात् प्रत्यक्षस्तर्हि समवायान्तरमपि समवायान्तरबलात् प्रत्यक्ष-
480 मित्याद्यावर्तनेन समवायप्रत्यक्षतायामपि समानः। **स्वाश्रयविशेषणस्येति**।
शब्दस्याश्रय आकाशम्। न चाकाशविशेषणतया असौ गृह्यते, किंतु समवायेनैव
गृह्यते। **सोऽपीति**। समवायः। **तृतीय इति**। संयोगो विशेषणविशेष्यभावः

समवायश्च इत्येवं तृतीयः समवायः । **अतथाभूतयोरपीति** । अविशेषणभूतयोः । **सोऽपि चतुर्थेऽस्त्विति** । त्रितयं तावत् पाश्चात्यम्, संयुक्तसमवायस्तु चतुर्थः । **शब्दत्वरूपत्वादेरपि प्रतीयमानत्वादिति** । शब्दत्वं समवेतसमवायेन, रूपत्वं तु संयुक्तसमवेतसमवायेन प्रतीयते । **अतो न समवायाभाववत् प्रत्यक्षबाधो नानवस्थेति** । यथा समवायेऽभावे च विशेषणता साधकस्य संबन्धान्तरस्य समवायादेः कल्पनायां प्रत्यक्षबाधोऽनवस्था च भवति, न तथा द्रव्यगुणकर्मसामान्यानां समवायादौ संबन्धे कल्प्यमाने इति भावः । **वि[६१२ख]श्रान्तेरिति** । द्रव्यगुणकर्मसामान्यानां संबन्धान्तरनिरपेक्षसंबन्धे एव समवायादौ विश्रान्तेर्नाप्यनवस्थेति योगः ।

482 **स दोष** इति । सत्यपि घटादौ घटाद्यभावव्यवहारप्रसङ्गलक्षणः । **तदविनाभाविधर्मापत्तेरिति** । द्रव्याद्यविनाभाविनां धर्माणामापत्तेः कैवल्यलक्षणे भूतधर्मे । अनुत्पन्नप्रध्वंसी इति प्रागभावः । उत्पन्नाविनाशी इति प्रध्वंसः । **ज्ञेयरूपं तत्त्वान्तरं नास्तीति** । बहिरभावः कोऽपि नास्तीत्यर्थः । **ज्ञानरूपमिति** । उपलम्भार्हे घटे यद् भूतलज्ञानं तदेवाभाव इत्यर्थः ।।

टीयाम् ।। **दृश्ये** इति । द्रष्टुं योग्ये ।

484 उने ।। **भूतलपक्षे** इति । भूतलमेव घटाभाव इत्यत्र पक्षे ।। **घटवत्यपि प्रसङ्ग** इति । घटवत्यपि भूतले घटाभावव्यवहारप्रसङ्ग इत्यर्थः । **घटवद्भूतलज्ञाने** इति । धटवच्च तद्भूतलं च तस्य ज्ञाने । **दृश्ये प्रतियोगिनीत्युक्तमिति** । दृश्ये इति कोऽर्थः ? दर्शनार्हे, न तु दृश्यमाने ।

485 **दृश्ये स्मर्यमाणे** इति । दर्शनार्हे घटादौ प्रतियोगिनि स्मर्यमाणे सति । **केवलात्मोपलम्भ** इति । केवलभूतलस्वरूपोपलम्भः । **स्मर्यमाणदृश्यमाने** इति । स्मर्यमाणश्चासौ दृश्यमानश्च स्मर्यमाणदृश्यमानः प्रत्यभिज्ञायमान इत्यर्थः । तस्मिन् । **घटवत्यपीति** । घटसंयुक्तेऽपि भुतले । **प्रसङ्गस्येति** । घटाभावव्यवहारप्रसङ्गस्य । **न चैकविषयत्वमनयोरिति** । घटं नोपलभे घटो नास्तीत्येवमाकारयोर्ज्ञानयोरुपलम्भाभाव एवैको विषय इत्यर्थः । **एकत्रेति** । उपल[म्भा]भावे ।।

489 **स चेति** । अभावः सन्निषेधापरनामा । **दृश्यानुपलब्धेरिति** । प्रमाणाभावात्, न तु प्रत्यक्षात् । **अधिकरणग्रहण एवेति** । भूवलयग्रहणे । **रूपविशेषाभावप्रतीतिप्रसङ्गादिति** । यत् शुक्लत्वादिकं रूपं घटे नास्ति तस्याभावप्रतीतिप्रसङ्गात् । **योग्यस्येति** । दृश्यस्य । **अनुपलब्धिश्चेति** । योग्यस्येत्यत्रापि

490 योज्यते । ततो योग्यस्यानुपलब्धिर्दृश्यानुपलब्धिरित्यर्थः । **तदभाव** इति । प्रतियोग्यभावः । **यदभाव** इति । यस्य शुक्लरूपादेरभावः । **तद्ग्राहकेन्द्रियेणेति** । तस्य शुक्लरूपादिग्राहकमिन्द्रियं चक्षुः, तेन । **अधिकरणग्रहणे** घटादिरूपाधिकरणस्य ग्रहणे । **स** इति । शुक्लादे रूपविशेषस्याभावः । **न हि**

**रूपग्राहकेणेन्द्रियेण तत्राधिकरणमुपनीतमिति**। न हि नैव रूपग्राहकेन्द्रियेण चक्षुषा तत्र रूपाभावप्रतीतौ प्रस्तुतायामधिकरणं वायुलक्षणमुपनीतम्, अपि तु स्पर्शेन्द्रियेण। **चक्षुरिन्द्रियं संबद्धमिति**। चक्षुषस्तावद् वायुना सह संयोगः
491 समस्तीत्यर्थः। **तस्येति**। चक्षुषः। **अधिकरणग्रहणे** इति। घटग्रहणे। **प्रतियोगिस्मरणे** इति। शुक्लरूपस्मरणे। **रूपाभावप्रतीत्या च नियमेनापेक्षितमिति**। चक्षुरिन्द्रियमिति पूर्वेण योगः। यथा क्वचिदाकाशदेशे शब्दाभावप्रतीत्या श्रोत्रमाकाशमगृह्णदप्य[६१३ क]पेक्षते। एवं वायो रूपाभावप्रतीत्या चक्षुर्घटम-
492 गृह्णदप्यपेक्ष्यते इति भावः। **अन्यथासिद्धत्वप्रलापमिति**। इन्द्रियस्य हि अधिकरणग्रहणे प्रतियोगिस्मरणे वा व्यापार उपक्षीण इत्यभावप्रमाणेन दृश्यानुपलब्ध्यपरनाम्ना प्रमेयाभावः परिच्छिद्यते इत्येवंलक्षणम्। **आन्तरालिकमेव व्यापारं व्यवधायकमिति भ्रान्तं प्रतिबोधयन्नाहेति**। प्रतियोगिस्मरणलक्षणमान्तरालिकं व्यापारम् इन्द्रियार्थसन्निकर्षस्याभावज्ञानजनने व्यवधायकं मत्त्वा भ्रान्तं परं प्रतिबोधयन्नाहेत्यर्थः॥

टीयाम्। **इत्यग्रे** इत्यादौ **व्यवदधतीत्येतदन्ते** वाक्ये इत्थं योजना। सविकल्पकप्रत्यक्षसिद्धावग्रे इति दर्शयिष्यामः। किं दर्शयिष्याम इत्याह— **यथा शब्दस्मरणपूर्वगृहीतपिण्डानुसन्धानादयो नेन्द्रियव्यापारं व्यवदधतीति**। न चेत्यादौ इति **साम्प्रतमित्येतदन्ते** शङ्कावाक्ये योजना व्याख्या च। **न चेति** साम्प्रतमिति योगः। भूतलविकल्पं सविकल्पकं भूतलप्रत्यक्षं प्रतिशब्दस्मरणादीनामनुयोगिता अनुकूलता च वर्तते। कस्माद् भूतलविकल्पं प्रत्यङ्गत्वात् कारणत्वाच्छब्दस्मरणादीनाम्। एतदपि कुत इत्याह—स्वाङ्गं स्वकारणमव्यवधायकमनुकूलमिति न्यायात्। घटस्य तु अभावं प्रति प्रतियोगिता प्रतिकूलता इति घटलक्षणप्रतियोगिस्मरणमिन्द्रियार्थसन्निकर्षस्य व्यवधायकमेवाभावज्ञानजननं प्रतीत्येतत् साम्प्रतं न च। घटस्य तु प्रतियोगितेत्येतदर्थकस्येत्यादिना आचार्यः पृच्छति। **तदभावस्येति**। घटाभावस्य। **भवत्विति**। घटाभावस्य प्रतियोगी भवतु घटः का नो हानिरित्यभिप्रायः सूरेः॥

493 उने॥ **व्यभिचारादिति**। इन्द्रियार्थसन्निकर्षमन्तरेणाप्यभावज्ञानोत्पत्तिदर्शनादित्यर्थः। **प्रमाणान्तरत** इति। अभावप्रमाणव्यतिरिक्तात् प्रमाणादभावज्ञानोत्पत्तिर्न संभवतीत्यभिमानः परस्येत्यर्थः॥

टीयाम्॥ **प्रतियोगिस्मरणविरहात् पूर्वमप्रतिपन्नमैत्राभावोऽपीति**। स्वरूपमात्रेणैव यदा वेश्माद्यर्थं दृष्टवान् न तदा मैत्रं स्मृतवानिति मैत्राभावं न प्रतिपन्नवान्।

494 उने॥ **विप्रकृष्टव्यवहितत्वेनेति**। विप्रकृष्टं सद् व्यवहितं गृहं विप्रकृष्टव्यवहितं तस्य भावः तत्त्वं तेन। **अनवस्थाप्रसङ्गादिति**। योऽभावः सोऽनुप-

**लब्धिगम्य** इत्यनुपलब्धिरपि प्रमाणाभावरूपाया अन्ययानुपलब्ध्या गमिकया भवितव्यम् । तस्या अप्यन्ययेत्यनवस्था । अतएवाह—**अनुपलब्धेरपीत्यादि** । **योग्यस्मरणाभावस्तावदस्तीति चेदिति** । स्मर्तुं योग्यस्य सतो मैत्रस्य यः स्मरणाभावः स चैत्रस्य तावदस्तीति कृत्वा प्रश्नजनितानियतदेशगता मैत्रस्मृतिश्चैत्रो योग्यस्मरणाभावादेवाभावप्रमाणलक्षणात् मैत्राभावं गृहे इदानीं प्रतिपद्यते इति पराशयः ।। **अभावविपर्ययसंशयाभावप्रसङ्गादिति** । प्रमेयाभावविषयौ यौ संशयविपर्ययौ तयो[६१३ ख]रभावप्रसङ्गात् । तथा हि मैत्राभावज्ञाने कर्तव्ये प्रतियोगिनश्चैत्रस्य नियतदेशगततया यत्स्मरणमधिकरणस्य च वेश्मनो या स्मृतिर्गृहगततया च मैत्रस्य यदस्मरणं योग्यस्मरणाभावशब्दवाच्यमित्येतावन्त्यसाधारणानि कारणानि । एतानि च न केनचिद् दोषेण दुष्टानीत्येतज्जन्या मैत्राभावविषया प्रमितिर्न विपरीता स्यात् । नापि संशयस्वभावा भवेद् अदुष्टकारणाजन्यत्वात् । **भवति** चेत्यादिना **नास्तीत्येतदन्तेन** ग्रन्थेन विपर्ययद्वयमुक्तम् । असतोऽपि सद्भावप्रतीतिरेकः । सतोऽप्यभावप्रत्यय इति द्वितीयः । **कथमित्यादिना** द्वितीयो भावितः । **अस्तीत्यादिना** तु प्रथम इति ।
495 **किमासीन्न वेति नावधारयामीति** वेत्यनेन पुनः संशयो दर्शितः । **न हि प्रतियोगिनमित्यादिना सर्वत्रानाश्वासप्रसङ्गादित्येतदन्तेन** ग्रन्थेन मैत्राभावविषयप्रमाया असाधारणकारणानामदोषदुष्टता प्रतिपादिता । **प्रतियोगिनमिति** । मैत्रम् । **अधिकरणं वेति** । वेश्म । ननु यद्यपि प्रतियोगिनो मैत्रस्यानियतदेशगततया यत्स्मरणमधिकरणस्य च या स्मृतिरेते यद्यपि समीचीने, तथापि यद्वेश्मगततया मैत्रस्यास्मरणं योग्ये स्मरणाभावशब्दवाच्यं तद्विपर्यस्तं भविष्यत्यतस्तज्जन्या गृहे मैत्राभावविषया प्रमापि विपर्यस्ता भविष्यतीत्याशङ्क्याह—**न च स्वरससिद्धस्यास्मरणस्यानुपलभ्यमानस्यैव विपर्यासः संभवतीति** । **स्वरससिद्धस्य** स्वभावत एवादुष्टस्याभावप्रमाजनने प्रमाणान्तरेण जायमानस्यैव सतो व्याप्रियमाणस्यास्मरणस्य योग्यस्मरणाभावलक्षणस्य विपर्यासो वैपरीत्यं संभवति न च । यदि हि ज्ञातं सद् योग्यास्मरणे मैत्राभावप्रमाणजनने व्याप्रियेत, तदा कदाचिज्ज्ञानवैपरीत्याज् ज्ञेयस्य सतो योग्यास्मरणस्यापि वैपरीत्यं संभाव्येतेत्येतन्निरासार्थमनुपलभ्यमानस्येत्युक्तम् ।

**इयती च सामग्रीति** । वेश्मनि मैत्राभावप्रमाजनिका भट्टानामियती च सामग्री । तामेवाह—**यदुतेत्यादि** । **प्रतियोग्यधिकरणस्मरणमिति** । प्रतियोगी च मैत्रोऽधिकरणं च वेश्म । तयोः स्मरणम् । **तत्रास्मरणं चेति** । वेश्मन्यस्मरणं प्रतियोगिनः । **त्वयाप्येतत् समर्थनीयमिति चेदिति** । नैयायिकस्यापि योग्यस्मरणाभावस्तावद्वेश्मनि मैत्राभावगमक इदानीमतस्तस्याप्यभावविषयविपर्ययसंशयाभावप्रसङ्गः समान इति भावः । **लिङ्गत्वेनेति** । न त्वभावप्रमाणत्वेन ।।

टीयाम् । **संयुक्तविशेषणलक्षणेन मनःसन्निकर्षेणेति** । स्मर्तव्यस्य हि

मैत्रस्य स्मरणाभावं मनसा गृह्णाति केन मनःसन्निकर्षेणेत्युच्यते—संयुक्तविशेषण-लक्षणेन । आत्मा हि मनसा संयुक्तः । तस्य च विशेषणं स्मरणाभावः । अतस्तेन संयुक्तविशेषणलक्षणेन मनःसन्निकर्षेण कृत्वा स्मरणाभावं यस्य गृह्णाति मानसेन प्रत्यक्षेण अहं तत्र [६१४ क] चैत्रं न स्मरामीत्युल्लेखवता । तेन लिङ्गेन संयुतिस्मरणाभावलक्षणेन ।।

496 उने ।। **व्यधिकरणतामिति** । स्मरणाभावो हि लिङ्गम्, स चात्मनि स्थितः । मैत्राभावस्तु साध्यमेव वेश्मनि इत्यन्यत्र हेतुरन्यत्र साध्यमिति व्यधि-

497 करणता । **न चावच्छेद्यावच्छेदकयोर्वैयधिकरण्यं दोष** इति । अवच्छेद्य-मुपलक्षणम् । अनयोर्वैयधिकरण्यं दोषः । तत्र मैत्रस्याज्ञाने इत्यवच्छेदकम् । गेहस्य ज्ञायमानत्वादित्यवच्छेद्यम् । **विशेषणे एव तन्नियमादिति** । विशेषण एव वैयधिकरण्यदोषस्य नियन्त्रणात्, न त्ववच्छेदके उपलक्षणत्वात् व्यधि-करणस्यैव सतो विशिष्टप्रतीतिजनकत्वात् । **तावन्मात्रेणैवोपयोगादिति** । उप-लक्षणस्योपलक्षणत्वमात्रेणैव व्यापारणात् । **उपलक्षितं त्विति** । गेहस्य ज्ञायमानत्वादिति हेतुस्वरूपम् । **परैरपीति** । बौद्धैः । **यद् यदा यज्जननस-मर्थमिति** । अत्र यदेति पदवाच्यः कालोऽवच्छेदको न चासौ साध्यसमानाधि-करणः । **एतदिति** । न चावच्छेद्यावच्छेदकयोर्वैयधिकरण्यं दोष इत्यदः ।

498 **व्यभिचारस्तदवस्थ** इति । इन्द्रियार्थसन्निकर्षमन्तरेणाप्यभावप्रमोत्पाद्यते इत्येवंलक्षणो व्यभिचारस्तदवस्थ एवेत्यभिप्रायः । **परोक्षवती** इति । परोक्षोऽर्थः परिच्छेद्यतया विद्यते यस्याः सा तद्वती । **तथापीति** । इन्द्रियार्थसन्निकर्ष-

499 व्यतिरिक्तकारणानभिधानेऽपि । **विषयसंयोगेनैवालोकव्यापार** इति । आलोको विषयसंयुक्त एव सन् प्रत्यक्षप्रमाजनने व्याप्रियते इत्यर्थः ।

एतच्चेत्यादेरयमभिसन्धिः । अन्धकारमध्यवर्तिना प्रमात्रा आलोक-मध्यवर्तिन आलोकवर्तिना वान्धकारमध्यस्थितस्य विषयस्य यदनुप-लब्धिस्तज्ज्ञाने विषयसंयोगेनैवालोकव्यापारो न त्विन्द्रियाधिष्ठानसंयोगेन । यदि हि विषयसंयोगमन्तरेणाप्यालोको व्याप्रियेतेन्द्रियज्ञानजनने, तदा यथान्धकार-मध्यवर्तिनालोकमध्यस्थित उपलभ्यते, तथा आलोकमध्यवर्तिना अन्धकारस्थो विषय उपलभ्येत । न चोपलभ्यते । तस्मात् सिद्धिः समीहीतस्येति भावः ।

500 **अत उक्तं** वार्त्तिककृता **उपलब्धिफलः संस्कार** इति । घटादेर्विषयस्यो-

501 पलब्धिफलः संस्कारः समस्ति, न तु चक्षुष इति तात्पर्यम् । **गुणिधर्म** इति । घटादिद्रव्यस्य धर्मः । **गुणधर्म** इति । रूपादेर्गुणस्य धर्मः । **तद्बलेनेति** । गुणिधर्मोद्भवबलेन । **रूपस्पर्शयोरविशेषेण ग्रहणमिति** । यौ कौचिद् रूपस्पर्शौ तयोर्ग्रहणप्रसङ्गः इति भावः । **तेजःस्पर्शग्रहेऽपि रूपाग्रहादिति** । निदाघसमये हि अपवरकान्तर्वर्तिभिर्मिहिररश्मीनां सुव्यक्तमुपलभ्यते स्पर्शो न तु रूपम् । **चन्द्रातपरूपग्रहेऽपि स्पर्शाग्रहाविति** । निदाघकाले चन्द्रातपरूपं

गृह्यते, न तु शिशिरस्पर्शः । **अनित्यो न भवत्येवेति** । गुणधर्मो ह्यनित्यो [६१४ख] भवन्नसावुद्भवः संस्कारापरनामा न ताव[द्]द्रव्यम्, द्रव्यस्य गुणधर्मत्वायोगात् । नापि गुणो निर्गुणत्वाद् गुणानाम् । नापि कर्म निष्कर्मत्वाद् गुणानाम् । न चान्यदनित्यं समस्ति, सामान्यादीनां नित्यत्वात् । **तस्येति** । सामान्यस्य । **स्वोपलब्धेरन्यत्रानिमित्तत्वादिति** । सामान्यं हि सामान्यविषयामेवोपलब्धिं जनयितुमलम्, न त्वन्यविषयाम् । **स्वभावभेद** इति । प्रतिनियतं किञ्चित्स्वरूपम् । **यत्रेति** । उद्भवनाम्नि स्वरूपे । **स चेति** । स्वभावभेद उद्भवापरनामा ।

**प्रत्यक्षलक्षणतयेत्यादि व्याचष्टे** इत्येतदन्तं प्रत्यक्षलक्षणकरणप्रवृत्तो हीत्यादि टीकाग्रन्थस्य पातनाग्रन्थः । **तत्कारणमुक्तमिति** । यत् प्रत्यक्षकारणमिन्द्रियार्थसन्निकर्षलक्षणतयोक्तमित्येवं संबन्धः कार्यः । **न चैवमालोकादय** इति । प्रत्यक्षस्य स्वरूपव्यवस्थापका न भवन्तीत्यर्थः ।।

वार्त्तिके ।। **तेन व्यपदेशकत्वमिति** । तेनेन्द्रियेणार्थेण वा व्यपदेशः ।

टीयाम् ।। **पक्षं व्यवर्तयतीति** । इन्द्रियमनःसन्निकर्षलक्षणं पक्षं व्यावर्तयति । इन्द्रियमनःसन्निकर्षस्तिष्ठतु अव्यपदेशकत्वादिन्द्रियमनसोः । आत्ममनःसन्निकर्षस्तु वक्तुमुचितो द्वयोरप्यात्ममनसोर्व्यपदेशकत्वादिति भावः । **युञ्जानस्येति** । युज समाधावित्यस्य प्रयोगः । ततः समाधिस्थस्येत्यर्थः ।।

वार्त्तिके । **इन्द्रियमनःसंयोगस्य वा अग्रहणं भेदेऽभेदादिति** । इन्द्रियज्ञानानां भेदेऽपि इन्द्रियमनःसन्निकर्षस्याभेदान्न ग्रहणं कृतं सूत्रकृता इन्द्रियमनःसन्निकर्षस्य । तथा हि विजययात्रातः प्रतिनिवृत्ते भूभुजि गवाक्षजालकैर्विलोकयन्तीनामबलानां यानि क्रमवन्ति हास्तिकाश्वीयादिज्ञानानि, तेष्विन्द्रियमनःसन्निकर्ष एक एव । इन्द्रियार्थसन्निकर्षास्तु भिद्यन्ते हास्तिकाश्वीयादीनामर्थानां क्रमेणैव गवाक्षजालद्वारे आगमनसंभवात् ।।

505 उने ।। **नन्वित्यादि** । एकदेशी ब्रूते—प्रत्यक्षज्ञानभेदे इन्द्रियमनःसंयोगो न भिद्यत इति यदुक्तं वार्त्तिककृता तत्र पृच्छाम्यहम्—इन्द्रियमनःसन्निकर्षाभेदो यथायथं संभवति तावत् । नन्विन्द्रियस्यानित्यत्वात् कथं तदाश्रितस्येन्द्रियमनःसन्निकर्षस्याभेदः ? उच्यते । स्वरूपतः सन्तानतो वा इन्द्रियस्याभेदात् । कियत्कालस्थायित्वे स्वरूपाभेदः प्रतिक्षणविशरारुत्वे च सन्तानत इन्द्रियस्याभेद इति भावः । एवं चेन्द्रियमनःसंयोगो न भिद्यत इति सम्यक् । यत् तु प्रत्यक्षज्ञानभेदमित्युक्तम्, तत्रायं ज्ञानभेदो व्यक्तिकृतो जातिकृतो वा स्यात् ?
505.3 प्रथमकल्पः **पूर्वस्मिन्नित्यादिना** निरस्तः । द्वितीयस्तु **उत्तरत्र त्वित्यादिना इति तदेकदेशिपरिहार** इति । इत्येवं रूपः । स चासावेकदेशी च तदेकदेशी । तस्य परिहारः । **तस्यैवेत्यादिना** संयुक्तसमवायेनेत्यादिटीकाया भावना ।

तस्यैव गोश्चक्षुषा संयोगेनोपलक्षितो य[६१५]स्तत्रैव गवि समवायस्तेन कृत्वा प्रथमं शुक्लगुणज्ञानं पश्चाद् गमनकर्मज्ञानमित्यक्षरयोजना कार्या ।।

टीकायाम् ।। **एवं हि सति भिद्येतेति** । स इन्द्रियमनःसन्निकर्षः **स्वसंबन्धिवाचकेनेति** । स्वस्वेन्द्रियमनःसन्निकर्षस्य संबन्धीनि इन्द्रियमनसी तयोर्वाचकेन प्रतिपादकेन। **स्वमिति** सन्निकर्षः । **तेन विशेषणेनेति** । स्वसंबन्धिवाचकलक्षणेन । **अस्येति** । विशेष्यस्य ज्ञानस्य ।।

506 उने ।। **यद्यपीत्यादिना** लक्षणं हि प्रसिद्धं भवतीत्यादिटीका भाविता ।

टीयाम् ।। **तस्मादिति भाष्योक्तो हेतुरिति** । तस्मादिन्द्रियमनःसंयोगस्य-आत्ममनःसंयोगेन सामान्यादित्यनेन वार्त्तिकेन भिद्यमानस्य प्रत्यक्षज्ञानस्य अयं

1.1.4 न भिद्यत इति । समानत्वान्नोक्त इत्येतद्भाष्ये उक्तो यो हेतुः स उक्त

100 इत्यर्थः । **चरितार्थत्वादिति स्वोक्त** इति । अन्यतराभिधानेन वा चरितार्थत्वादनभिधानमिति वार्त्तिककारेणोक्तेर्हेतुर्न भाष्यकारेणेत्यर्थः[१] ।।

---

१. एतावानेव ग्रन्थभागो मातृकायामुपलब्धः। जैनेन लेखकेनात्र शुभमस्तु सकलसङ्घस्येति योजयता तत्सविधावप्येतावत एव समुपलम्भ आसीदिति सूचितम् ।।

